# मुस्कुराए जाइए ज़ायक़ेदार ... ट्रिंका के संग !

ट्रिंका पीजिए,
स्वादवाला, मतवाला,
ठंडे-ठंडे, भरे-भरे, खनखनाते गिलास
पलभर में तैयार.
ट्रिंका — मज़ेदार.

हर बोतल से बनें ५० गिलास.
हर पैक से बनें ६ गिलास.







पाँच रसीले स्वाद : ऑरेंज, लेमन, पाइनएप्पल, कोला, फ्रूट पंच.

**ट्रिंका**

स्वाद है सच्चा-सब कहें अच्छा

cpc कॉर्न प्रोडक्ट्स कं. (इंडिया) लि.

CLARION-B/CP/14/193

# वर्तमाने प्रवर्तनम्

**गते शोकं न कुर्वीत भविष्यं नैव चिन्तयेत्।**
**वर्तमानेषु कार्येषु वर्तयन्ति विचक्षणाः॥**

यत् गतं तद्विषये विशेषचिन्ता न करणीया। सर्वदा भविष्यचिन्तनम् अपि न उचितम्। वर्तमाने काले ये सुयोग्यं कार्यं निर्वहन्ति ते एव पण्डिताः।

एवं तर्हि इतिहासः किं निरर्थकः? भविष्यचिन्तनं निष्प्रयोजकम्? तथा न वदति अयं श्लोकः। वस्तुतः इतिहासः श्रेष्ठः गुरुः। इतिहास-कारणतः अनुभवः सञ्चितः भवति। ततः एव प्रगतिः। एवमेव भविष्य-चिन्तनात् लक्ष्यस्पष्टता। ततः एव मार्गनिश्चयः। तथापि इतिहासः भविष्यं वा सार्वकालिकचिन्तनस्य विषयः न। कालानुगुणं सन्दर्भानुगुणं च तयोः स्पष्टता मनसि आकलनीया। पुनश्च वर्तमानकालस्य चिन्तनं करणियम्।

ओस्लर् वदति- ''सङ्कल्पितस्य कार्यस्य सुचारुरूपेण निर्वहणे एव भवतः महत्त्वाकांक्षा सीमिता भवतु। विजयाभिलाषी पथिकः वर्तमाने विशेषक्रिया-शीलः भवति। श्वस्तनविचारेण मनः चिन्ताकुलं यथा न भवेत् तथा करणे भवतः शक्तेः पूर्णः विनियोगः भवतु'' इति।

यः दैनन्दिनकार्यनिर्वहणं सम्यक् जानाति तस्य आत्मविश्वासः गणनीयप्रमाणेन अभिवर्धते। स्वत्वं प्रवर्धते। अन्यान् मार्गान् उपदेष्टुम उपकर्तुं च सः अवकाशान् प्राप्नोति। पराजयस्य सम्मुखीकरणे स्थैर्यं प्राप्नोति। प्रगतेः सोपानानि स्पष्टं प्रतिभान्ति। प्राप्तः अल्पः अपि विजयः त प्रगतिपथे प्रेरयति। क्रमशः सः सर्वेषाम् आदरपात्रं च भविष्यति।

—'बदुकलु कलियिरि' (जीवनमार्गदर्शी) इति कन्नडपुस्तकतः सङ्गृहीतम्।

# शतृप्रत्ययान्तेषु 'नुम्'व्यवस्था

शिष्यः - श्रीमन् ! गच्छन् अस्ति, कुर्वन् अस्ति, पठन् अस्ति इत्यादीनि तात्कालिक-वर्तमानकालस्य (Present continuous) रूपाणि किल ?

आचार्यः - आम्, व्याकरणभाषया एतानि गच्छन् कुर्वन् इत्यादीनि शतृ-प्रत्ययान्तरूपाणि इति उच्यन्ते ।

शि - एतेषां पुल्लिङ्गरूपाणि सुलभानि । गच्छन्-लिखन्-शृण्वन्-उपविशन् इति सर्वेषां समानरूपता । नपुंसके अपि तथैव गच्छत्-लिखत्-शृण्वत्-उपविशत् इत्यादीनि समानरूमाणि ।

आ - एवं तर्हि शतृप्रत्ययान्तानां स्त्रीलिङ्गरूपाणि क्लेशकराणि इति किल भवतः अभिप्रायः ?

शि - आम् । यतः पठन्ती-गच्छन्ती-लिखन्ती इत्यादीनि एकरीत्या दृश्यन्ते । कुत्रचित् शृण्वती-कुर्वती इत्यादीनि रूपाणि अपि दृश्यन्ते । तदा च कुर्वती इति रूपं साधु वा, उत कुर्वन्ती इति रूपम् ? इति संशयः उद्भवति ।

आ - शतृप्रत्ययान्तानां स्त्रीलिङ्गरूपेषु कुत्र नकारः (नुम्) योजनीयः कुत्र न योजनीयः इति भवान् विवेक्तुं न शक्नोति ।

शि - आम् । कुत्रचित् स्वीकुर्वन्ती इति लिखितवान् आसम् । तदा अग्रजः 'स्वीकुर्वती इति रूपम् एव साधु' मां बोधितवान् ।

आ - एतां नुम्व्यवस्थां (कुत्र नकारः, कुत्र नकारः नास्ति इति) ज्ञातुं न तथा क्लेशः । किन्तु ततः पूर्वं भवता विषयद्वयं ज्ञातव्यम्-(१) आत्मनेपदि-परस्मैपदि-विभागः । (२) गणव्यवस्था ।

शि - भवति, पठति, गच्छति इत्यादीनि परस्मैपदीनि। (वर्तमानकाले प्रथम-पुरुषे एकवचने 'ति' इति श्रूयते) एधते, वर्धते, रोचते इत्यादीनि आत्मनेपदीनि। (वर्त. प्र. ए. 'ते' इति श्रूयते) एतत् अहं जानामि एव।

आ - तात्कालिक-वर्तमानकाले परस्मैपदिधातवः शतृप्रत्ययं प्राप्नुवन्ति। (आगच्छन्, पठन्, तिष्ठन्) आत्मनेपदिधातवः शानच्प्रत्ययं प्राप्नुवन्ति। तेषां च एधमानः वर्धमानः इत्यादीनि रूपाणि।

शि - एवं तर्हि शत्रन्तानां शानजन्तानां च अर्थभेदः नास्ति।

आ - युक्तम् उक्तम्। द्वितीयतः गणविभागः ज्ञातव्यः। संस्कृते सामान्यतः २००० धातवः सन्ति। ते दशसु गणेषु विभक्ताः। तत्रापि १,४,६,१० गणीयानां धातूनां विशेषतः साम्यम्। यथा-

भवति – प्रथमगणः, कुप्यति – चतुर्थगणः

तुदति – षष्ठगणः, चोरयति – दशमगणः

शि - अत्र सर्वत्र 'ति' प्रत्ययतः पूर्वम् ह्रस्वः अकारः दृश्यते।

आ - यदि कोऽपि धातुः एतेषु चतुर्षु गणेषु प्रविशति तर्हि शतृप्रत्यये कृते स्त्रीलिङ्गे 'नुम्' योजनीयम्। इतरत्र 'नुम्' न योजनीयम्। एषः सुलभः मार्गः।

शि - 'करोति' एतेषु चतुर्षु गणेषु न प्रविष्टम्। अतः कुर्वती इत्येव, न तु कुर्वन्ती। एवं किल ?

आ - आम्। कानिचन उदाहरणानि यथा–

श्रृणोति – श्रृण्वती, रोदिति – रुदती

गृह्णाति – गृह्णती, जानाति – जानती

शि - इदानीं मया 'नुम्' व्यवस्थायाः सारः ज्ञातः। अतः इतःपरं मम सम्भाषणे एतद्विषये दोषः न भवेत्।

—✱—



# चन्दमामा

मे – १९८६

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-५०

वार्षिकं ग्राहकशुल्कम् रू. ३०-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

संस्कृतभाषा कम्प्यूटरयन्त्रे उपयोक्तुम् अर्हा अनन्या सहजभाषा इति प्रमाणसिद्धम् इदानीम्। अद्यावधि सहजा काचित् भाषा कम्प्यूटरयन्त्रे उपयोक्तुं न शक्या इति सिद्धान्तः कश्चन सर्वत्र श्रूयते स्म। यतः सहजाः भाषाः सन्दिग्धार्थकाः (Ambiguous) भवन्ति। विज्ञानिनः कम्प्यूटरद्वारा तर्कबद्धतया विषयान् प्रकटीकर्तुं कृतकभाषाः (Artificial language) सृष्टवन्तः आसन्। किन्तु इदानीं विज्ञानिनः एककण्ठेन उद्घोषयन्ति यत् संस्कृतम् एका एव भाषा या च सहजा भाषा सती कम्प्यूटरयन्त्रे उपयोक्तुम् अर्हा अपि इति। एतद्विषये इदानीं व्ययसाध्यानि श्रमसाध्यानि च विशेषसंशोधनानि क्रियमाणानि सन्ति।

प्राचीनाः वैयाकरणाः पाणिनि-पतञ्जलि-नागेशादयः कम्प्यूटरविज्ञानं न जानन्ति स्म। तथापि असदृश्या प्रतिभया भाषां तथा परिष्कृतवन्तः यत् अद्य विज्ञानिनः तेषां वैज्ञानिकं ज्ञानं ज्ञात्वा आश्चर्येण स्तब्धाः सन्ति। नियमेषु एकरूपता, शाब्दबोधक्रमः इत्यादिभिः एषा भाषा कम्प्यूटरविज्ञानेन अपि आदृता अस्ति।

सम्पुटः–३ मे–८६ सञ्चिका–२

प्रतिकृतिमूल्यम्– रू.२-५० वार्षिकं ग्राहकशुल्कम्– रू.३०/-



रसप्रश्ना:–

# एते कुत्र निलीना:?

[अध: अष्ट गणा: निर्दिष्टा: सन्ति। एकैकस्मिन् गणे अपि व्यक्तित्रयं निलीनम् अस्ति। व्यक्तीनां नाम्नाम् अक्षराणि व्यस्ततया स्थापितानि। तानि अक्षराणि क्रमश: स्थापयन्त: व्यक्तीनाम् अन्वेषणं कुर्वन्तु।]

१. प्रसिद्धकवय: –

का भा ज लि दा र स: वि: य दे व:

२. वैयाकरणा: –

पा प व ञ्ज नि: त र चि: णि लि: रु

३. रामायणसम्बन्धिन: –

द सु श कौ म र स थ: न्त्र: ल्या:

४. महाभारतसम्बन्धिन: -

ध दु गा र्यो र्म न्धा रा री ध ज: न:

५. ऋषय: –

वि वा श्वा व म मि शि त्र: दे ष्ठ: व:

६. कवयित्र्य: –

ति वि ग रु ज्जि ङ्गा म दे ला का म्बा वी

७. देव्य: –

पा स ल ती क्ष्मी र र्व दे स्व वी ती

८. विष्णो: अवतारा: –

व न वा र रा म्ह सिं न: ह: ह:

उत्तराणि–

१. कालिदास:, भारवि:, जयदेव:
२. पाणिनि:, पतञ्जलि:, वररुचि:
३. दशरथ:, सुमन्त्र:, कौसल्या
४. धर्मराज:, दुर्योधन:, गान्धारी
५. विश्वामित्र:, वामदेव:, वशिष्ठ:
६. तिरुमलाम्बा, विज्जिका, गङ्गादेवी
७. पार्वती, सरस्वती, लक्ष्मीदेवी
८. वराह:, नरसिंह:, वामन:

## रसवार्ता:



### कुजग्रहं प्रति यात्रा

विंशतिवर्षेभ्यः पूर्वं वेर्न् हरवान् नामकः शास्त्रज्ञः उक्तवान् आसीत् यत् १९८४ तमे वत्सरे मनुष्यः कुजग्रहे पादार्पणं करिष्यति इति। किन्तु तत् न युक्तं जातम्। इदानीम् अमेरिकदेशीया न्याषनल् एरोनाटिक्स् एण्ड् स्पेस् एड्मिनिस्ट्रेषन् (नासा) संस्था '१९९० तमे वत्सरे मानवरहिता व्योमनौका कुजं प्रति प्रेषणीया' इति प्रयत्नं कुर्वती अस्ति।

### प्राचीनभारते सूचीचिकित्सा

सूचीचिकित्सायाः [Acupuncture] प्रारम्भः प्राचीने भारते एव अभवत् इति अलहाबाद-नगरस्य भारतीय-सूची-चिकित्सा-केन्द्रस्य निर्देशकः डा॥ पि. के. सिङ्ग् अभिप्रायं प्रकटयति। एषु दिनेषु बीजङ्ग् प्रदेशे प्रवृत्तायां सभायां उपन्यासं कुर्वन् डा॥ सिङ्ग् उक्तवान् यत् षट्पञ्चाशत्-(५८) तमदिनपर्यन्तं शरतल्पे स्थितस्य भीष्मस्य उदाहरणम् अत्र प्रमाणम् इति।





### दन्तफेनः आहारः!

अमेरिकादेशीया जूडीष्वार्टस् नामिका महिला नौकाप्रयाणे मार्गभ्रष्टा सती इण्डोनेषिया समुद्रतीरे २१ दिनानि यापितवती। तत्सन्दर्भे सा आहाराभावात् स्वसमीपे स्थितं दन्तफेनम् (Tooth Paste) एव प्रतिदिनं किञ्चित् किञ्चित् खादन्ती प्राणान् रक्षितवती।

# भवन्तः जानन्ति वा?

१. मानवशरीरे नाडी प्रतिनिमेषं सामान्यतः कतिवारं स्पन्दते?
२. प्रप्रथमं शस्त्रचिकित्सया मनुष्ये हृदयान्तरं कदा स्थापितम्?
३. मनुष्यस्य मस्तिष्कस्य सामान्यपरिमाणं किम्?
४. रक्ते स्थिताः रक्तकणाः कियत्कालं जीवन्ति?
५. अलेक्साण्डर् फ्लेमिङ्ग् किंनिमित्तं प्रसिद्धिं प्राप्तवान्?

(उत्तराणि ६५तमे पृष्ठे)

# अलम्बुसा

देवेन्द्रस्य आस्थाने अलम्बुसा नाम अप्सराः अपि अन्यतमा। एकदा सा स्वप्रियकरेण विदूषक-नामकेन गन्धर्वेण सह वार्तालापे मग्ना आसीत्। तदा देवेन्द्रः तत्र आगतः। किन्तु सा तं न लक्षितवती। तेन कुपितः देवेन्द्रः "भवती भूलोके मानवस्त्री भवतु। सः अपि मानवजन्म प्राप्नोतु" इति शापं दत्तवान्।

शापस्य प्रभावेण विदूषकः कौशाम्बिनगरे सहस्रानीक-नाम्ना जन्म प्राप्तवान्। अलम्बुसा मृगवती-नाम्ना जन्म प्राप्तवती। तयोः विवाहः निश्चितः। तत्समये देवदानवयोः युद्धम् आरब्धम्। देवेन्द्रः साहाय्यार्थं सहस्रानीकम् आहूतवान्। सहस्रानीकः देवानां पक्षे स्थित्वा युद्धं कृतवान्। दानवाः पराजिताः। यदा सहस्रानीकः भूलोकं प्रति प्रस्थितः तदा देवेन्द्रः तेन सह तिलोत्तमाम् अपि प्रेषितवान्। मार्गे मृगवत्याः स्मरणे स्थितः सहस्रानीकः तिलोत्तमायाः प्रश्नानां उत्तराणि सम्यक् न दत्तवान्। तदा कुपिता तिलोत्तमा- 'भवान् यां स्मरन् अन्यमनस्कः आसीत् तया चतुर्दश-वर्षाणि यावत् वियुक्तः भवतु' इति शापं दत्तवती।

कौशाम्बीं गत्वा सहस्रानीकः मृगवतीं परिणीतवान्। कालान्तरे सा गर्भिणी जाता। तदा सा सुगन्धयुतेन रक्तवर्णमयेन जलेन पूर्णे सरोवरे स्नानं करणीयम्' इति स्वकीयाम् इच्छां प्रकटी-कृतवती।

मृगवती रक्तजलेन पूर्णे सरोवरे स्नानं कुर्वती आसीत्। तदा तत्र आगतः कश्चन गृध्रः मृगवतीं रक्तवर्णयुतं मांसपिण्डं मन्यमानः तां चञ्च्वा गृहीत्वा अगच्छत्। सहस्रानीकः दुःखसागरे निमग्नः।

गृध्रः मृगवतीं कस्मिंश्चित् पर्वतशिखरे अपातयत्। मुनिकुमारः कश्चित् तां जमदग्न्याः आश्रमं नीतवान्। तत्र सा उदयननामकं पुत्रं प्रसूतवती।

चतुर्दशवर्षाणाम् अनन्तरं कश्चन अहितुण्डिकं सर्पं गृह्णन्तं बालकः उदयनः दृष्टवान्। सर्पः अहितुण्डिकस्य हस्ततः विमोचनं प्राप्तुं प्रयत्नं करोति स्म। उदयनः सुवर्णनाणकम् दत्त्वा सर्पं विमोचित-वान्। अहितुण्डिकः कौशाम्बिकायां यदा नाणकम् अन्यस्मै दत्तवान् तदा तत् राजनाणकम् इति तेन ज्ञातम्। एतां वार्तां सहस्रानीकः ज्ञातवान्। अहितुण्डिकेन सह जमदग्नेः आश्रमं गतवान्। पत्नीं च गृहम् आनीय सुखं जीवनं यापितवान्।







# बुद्धिमान् जामाता

पूर्वं वीरभद्रः नाम भूस्वामी आसीत्। विवाहानन्तरं बहुकालं यावत् तस्य सन्तानं न आसीत्। अन्ते दैवानुग्रहेण एका पुत्री उत्पन्ना। भूस्वामी तस्याः नाम 'सुप्रिया' इति निश्चित्य तां प्रीत्या लालितवान्। सुप्रिया कालानुगुणं योग्यं विद्याभ्यासं कुर्वती बुद्धिमती सञ्जाता। बाल्यात् आरभ्य अपि सा सर्वदा गूढं वदति। लघुविषयान् अपि सा व्याजोक्त्या गूढोक्त्या वा वदति। तस्याः अभिप्रायं ज्ञातुं मातापितरौ एव कदाचित् कष्टम् अनुभवतः।

पुत्री विशेषबुद्धिमती इति भूस्वामी सम्यक् जानाति सः एतेन बहु सन्तुष्टः अपि। किन्तु पुत्र्याः गूढोक्तिं श्रुत्वा सः खिन्नः भवति, कुपितः भवति, चिन्ताकुलः भवति च।

सुप्रिया प्राप्तवयस्का जाता। योग्यं वरम् अन्वेष्टुं भूस्वामी प्रयत्नम् आरब्धवान्। धनिककुले जाताः बहवः युवकाः तेन दृष्टाः। किन्तु तेषु बहवः दुर्व्यसनेन वशीकृताः। द्वित्राः वरपितरः स्वयं भूस्वामिनः गृहम् आगतवन्तः। किन्तु 'धनाशया एते अत्र आगताः' इति चिन्तयित्वा सुप्रिया तेषां विवाहप्रस्तावं निराकृतवती।

अन्ते वरान्वेषणे श्रान्तः भूस्वामी पुत्रीम् उक्तवान्- "भवती कीदृशं परिणेतुम् इच्छति इत्येव अहं न ज्ञातवान्" इति।

"तात ! प्रामाणिकं विवेकशीलं बुद्धिमन्तं युवकम् अहं परिणेतुम् इच्छामि" इति उक्तवती सुप्रिया।

"भवत्याः इच्छा मम अपि अनुमता एव। किन्तु यः परिणेतुम् इच्छन् आगच्छति तस्मिन् भवत्या सूचिताः गुणाः सन्ति वा न वा इति कथं जानीमः ?" इति पृष्टवान् भूस्वामी।

"तत्र कः क्लेशः ? यः परिणयेच्छया



वीरभद्रस्य कार्यालये भूसम्बन्धिनः आय-व्ययस्य गणनां लेखितुं सुकेतुः नाम कश्चित् नियुक्तः आसीत्। सः गणनायां वञ्चयन् धनम् अपहरति स्म। एतं विषयं भूस्वामी जानाति, सुप्रिया अपि जानाति। किन्तु प्रमाणीकर्तुं तयोः समीपे कोऽपि आधारः न आसीत्। अतः उभौ अपि तूष्णीं स्थितवन्तौ।

एकदा भूस्वामी सुबुद्धिना सह पार्श्वग्रामं प्रति प्रस्थितवान्। तं ग्रामं गन्तुं मार्गः समीचीनः नास्ति इत्यतः तौ पादाभ्याम् एव प्रस्थितवन्तौ। प्रयाणार्थम् उद्युक्तौ एतौ उद्दिश्य "चिरप्रयाणिकौ इव मार्गः भाराय यथा न स्यात् तथा गच्छन्तौ पात्रे स्थितं स्वीकुरुताम्" इति वदन्ती सुप्रिया पाथेयं दत्तवती। सुबुद्धिः तं स्वीकृतवान्।

"प्रस्थानसमये पाथेयं यत् दत्तवती तत् उचितम् एव। किन्तु तत्सन्दर्भे सा असम्बद्धं यत् उक्तवती तस्य अर्थं न ज्ञातवान् एव अहम्" इति वदन् सोपानानि अवतीर्णवान् भूस्वामी।

तदा सुबुद्धिः उक्तवान्- "भवतः पुत्री असम्बद्धं किमपि न प्रलपितवती। चिर-प्रयाणिकौ नाम सूर्यः चन्द्रः च। 'मार्गः भाराय यथा न भवेत् तथा गन्तव्यम्' इत्यस्य अर्थः- सम्भाषणपूर्वकम् आयासः यथा न

आगच्छति तम् अहं कांश्चन प्रश्नान् गूढोक्त्या पृच्छामि। यः तेषां वचनानाम् अर्थं सम्यक् ज्ञातुं शक्नोति सः एव योग्यः वरः इति ज्ञातुं शक्यते" इति उक्तवती सुप्रिया।

एवं स्थिते कदाचित् सुबुद्धिः नाम युवकः वीरभद्रस्य गृहम् आगतवान्। वस्तुतः सुबुद्धिः अपि भूस्वामिनः पुत्रः एव। किन्तु दौर्भाग्य-वशात् इदानीं सः दीनावस्थायाम् अस्ति। वीरभद्रस्य कार्यालये किमपि कार्यं लभ्येत इति आशया सः आगतवान् अस्ति। तस्य रूपं वाग्व्यवहारं च दृष्ट्वा सन्तुष्टः भूस्वामी तं स्वसाहाय्यकत्वेन नियोजितवान्।

सुप्रिया आरम्भतः अपि सुबुद्धेः व्यवहारं सुसूक्ष्मं परिशीलयन्ती आसीत्।

ज्ञायेत तथा गन्तव्यम्' इति। एवं तया आवयोः हितम् एव उक्तम्'' इति। एतत् वचनं श्रुत्वा सुप्रिया मन्दहासं प्रकटितवती। भूस्वामी अपि आश्चर्येण शिरः चालितवान्।

अन्यस्मिन् दिने व्याधानां वसतिप्रदेशतः मधु, कस्तूरिद्रव्यम् इत्यादिकम् आनेतुं सुबुद्धिः अरण्यं प्रति प्रस्थितवान्।

अरण्यं गन्तुम् उद्युक्तस्य सुबुद्धेः हस्ते एकं लवित्रं दत्त्वा ''एकाकी गच्छति किल! एतस्य लवित्रस्य साहाय्येन एकम् अश्वं निर्माय जागरूकतया गत्वा आगच्छतु'' इति उक्तवती सुप्रिया।



पुत्र्याः वचनं श्रुत्वा भूस्वामी- ''किं वदति भवती! सः पर्वतमार्गेण गच्छति। सः मार्गः अतीव सङ्कीर्णः कण्टकाकीर्णः च। तत्र पादाभ्यां गमनम् एव दुष्करम्। कथम् अश्वम् आरुह्य गच्छेत्! अन्यच्च अश्वस्य लवित्रस्य च कः सम्बन्धः?'' इति पृष्टवान्।

सुप्रिया सुबुद्धेः मुखं दृष्टवती। तदा सुबुद्धिः उक्तवान्- ''एतस्य अर्थः- एतेन लवित्रेण वृक्षस्य दृढां शाखां कर्तयित्वा दण्डम् एकं निर्मातु। तेन गमने सौलभ्यं सिध्यति। एतादृशप्रयाणेषु दण्डः एव अश्वः इव साहाय्यकः भवति'' इति।

पुनः कदाचित् भूस्वामिनः लिपिकारः सुकेतुः स्वभगिन्याः विवाहं महता वैभवेन कारितवान्। विवाहार्थं सुप्रियायाः भूस्वामिनः च विशेषामन्त्रणम् आसीत्। ग्रामीणानां कृते भूरिभोजनं व्यवस्थापितम् आसीत्।

तदा सुप्रिया सुकेतुं पृष्टवती- ''भगिन्याः विवाहार्थं महान् व्ययः कृतः दृश्यते। एवं तर्हि गृहस्य आधारभूमिः दृढा वा?'' इति।

''मातः! मम तु गृहं कुटीरः इव अस्ति। तृणैः आच्छादितं तत्। एतादृशस्य गृहस्य आधारभूमिः कथं वा दृढा स्यात्?'' इति उत्तरितवान् सुकेतुः।

तत्समये सुबुद्धिः तत्र न आसीत्। सुप्रिया पितरम् उक्तवती- ''तात! अहं तदीयाम् आर्थिकपरिस्थितिं पृष्टवती। एषः निश्चयेन वञ्चकः इति प्रमाणीकरिष्यामि।



एतदर्थं कञ्चन उपायम् आयोजयिष्यामि" इति।

एकसप्ताहानन्तरं धान्यसङ्ग्रहणकार्यम् आरब्धम्। 'कार्यं कथं प्रचलति?' इति ज्ञातुं भूस्वामी सुबुद्धिः च केदारं प्रति गतवन्तौ। मध्याह्ने भोजनसमये सुप्रिया सुकेतुम् आहूतवती। तस्य हस्ते पाथेयपात्रं यच्छन्ती उक्तवती च- "भोः! अट्टे पूर्णचन्द्रः अस्ति। अन्तरट्टे षट् बदरफलानि सन्ति। ग्रामे इदानीं चोरेभ्यः भीतिः अस्ति। यदि सर्वदिक्षु जागरूकतया परीक्ष्येत तर्हि चोरस्य ग्रहणं सुलभेन भवेत्। एतं वचनं सुबुद्धि निवेदयतु" इति।

भोजनपात्रं स्वीकृत्य प्रस्थितस्य सुकेतोः मनसि मार्गे कश्चन संशयः उत्पन्नः। "सुप्रिया-सुबुद्ध्योः मैत्री दिने दिने वर्धमाना दृश्यते। यदि एतयोः विवाहः भवेत् तर्हि न तत्र आश्चर्यम्। सुप्रिया सुबुद्धिनिमित्तं विशेषभक्ष्यादिकं निर्माय मद्द्वारा प्रेषयन्ती अस्ति। 'अहं तत् जानीयाम्' इति दृष्ट्या श्लेषेण किमपि उक्तवती। अत्र तु कोऽपि नास्ति। अन्तः किम् अस्ति इति मया किमर्थं वा न परीक्षणीयम्?" इति चिन्तितवान् सः।

अतः सः मार्गतः किञ्चिद्दूरं गत्वा रहसि पाथेयपात्रम् उद्घाटितवान्। पदार्थानां गन्धेन तस्य मुखे लाला उत्पन्ना। अतः सः त्वरया भोजनपदार्थान् किञ्चित् किञ्चित् स्वीकृत्य रुचिम् आस्वादितवान्। पुनः यथापूर्वं पात्राणि बद्ध्वा केदारं गतवान्। सुबुद्धेः हस्ते पाथेयम् अर्पितवान्।

सुबुद्धिः पात्राणि एकैकशः उद्घाटितवान्। तत्सन्दर्भे सुकेतुः सुप्रियया उक्तानि वाक्यानि सुबुद्धिम् उक्तवान्। भूस्वामी तेषां वाक्यानाम् अर्थं न ज्ञातवान् एव।

सुबुद्धिः तु सर्वाणि पात्राणि परीक्ष्य- "भोः 'भवतः चौर्यबुद्धिः परीक्षणीया' इति सा गूढोक्त्या मां सूचितवती आसीत्। भवतः चौर्यबुद्धिः प्रमाणिता अभवत्। भवान् मार्गे सर्वेषां भोजनपदार्थानां रुचिं दृष्टवान् किल?

एवम् एव गणनालेखनसमये अपि चौर्यबुद्धिः प्रदर्शिता स्यात् एव। सत्यं वदतु'' इति सुकेतुं वदन् कोपं प्रदर्शयन् तीक्ष्णदृष्ट्या दृष्टवान्।

सुकेतुः तु किङ्कर्तव्यतामूढः सन् मौनं स्थितवान्। तदा सुबुद्धिः एव पुनः उक्तवान्- ''अट्टे पूर्णचन्द्रः अस्ति इत्यस्य अर्थः- उपरितने पात्रे कौमुदीसदृशं श्वेतवर्णकं दधि अस्ति इति। अधस्तन पात्रे षट् बदरफलाकाराः अपूपाः सन्ति इति सा सूचितवती। सर्वेषां पात्राणां परीक्षणेन चौर्यं ज्ञायते इत्यपि सा गूढोक्त्या सूचितवती'' इति।

सुकेतोः भीतिपूर्णं मुखं, कम्पमानं शरीरं च दृष्ट्वा भूस्वामी निश्चितवान्- 'सुकेतुः निश्चयेन चोरः' इति।

अतः सः कोपेन गर्जितवान्- ''आगच्छतु, भटप्रमुखस्य समीपं गच्छामः। सः एव भवतः मुखात् सत्यं वाचयति'' इति।

भटप्रमुखस्य नामश्रवणेन एव सः भीतः। अतः भूस्वामिनः पादयोः पतित्वा अश्रूणि मोचयन्- 'श्रीमन्! अविवेकिनः मम अपराधः क्षन्तव्यः। असमीचीनां गणनां लिखन् भवतः धनम् अपहृतवान् इति तु सत्यम् एव। तद्धने एतावता एव किञ्चित् व्ययितम्। अवशिष्टं प्रत्यर्पयामि। मां क्षाम्यतु'' इति दीनतया प्रार्थितवान्।

दयालुः भूस्वामी- ''अस्तु, इतःपरं कदापि एवं न करोतु'' इति उक्त्वा तं प्रेषितवान्।

अनन्तरं गृहं प्रत्यागतः भूस्वामी पुत्रीं प्रवृत्तं सर्वं निवेद्य उक्तवान्- ''पुत्रि! सुबुद्धि-विषये भवत्याः अभिप्रायः कः? अहं तु चिन्तयामि- सः बुद्धिमान् प्रामाणिकः अपि'' इति।

''मम अपि अभिप्रायः तथैव अस्ति। एषः भवतः जामाता भवितुं सर्वथा अर्हः'' इति सन्तोषेण उक्तवती सुप्रिया।

पुत्र्याः वचनेन सन्तुष्टः भूस्वामी मन्दहासं प्रकटितवान्। अनन्तरम् एकमासाभ्यन्तरे सुप्रिया-सुबुद्ध्योः विवाहः सवैभवं सम्पन्नः।





# उत्तमः गायकः

पूर्वं शृङ्गवरप्रान्तं कश्चित् महाराजः परिपालयति स्म। कदाचित् महाराजः चिन्तितवान्- "मम सभायां यथा कविपण्डिताः मल्लाः च सन्ति तथैव एकः गायकः अपि अस्ति चेत् सभागौरवं वर्धते" इति। एतं स्वाभिप्रायं मन्त्रिणम् उक्तवान् सः। मन्त्रिणः आलोचनानुसारं उत्तमगायकम् अन्वेष्टुं सङ्गीतस्पर्धा आयोजनीया इति निर्णयः कृतः।

तदा मन्त्री एकं सन्देहम् उद्भावितवान्- "महाराज, अस्यां स्पर्धायां न्यायनिर्णायकः कः? तत्रापि पक्षपातं विना वक्तुं समर्थः सङ्गीतज्ञः कः अस्ति? आस्थानगायकं निश्चेतुं विशेषज्ञानम् आवश्यकं खलु" इति।

"तदर्थम् अन्यः किमर्थम्? अहं राज्ञी भवान् च सङ्गीतप्रियाः किल! न्यायनिर्णायकत्वेन वयं त्रयः एव पर्याप्ताः। अस्माकं त्रयाणां दृष्ट्या अपि यः समीचीनः सः स्वीकरणीयः। एतदर्थम् अन्यविदुषः अन्वेषणं न आवश्यकम्" इति उक्तवान् राजा।

यद्यपि राजा सङ्गीतप्रियः तथापि तस्य शास्त्रीयसङ्गीतज्ञानं नासीत्। श्रूयमाणाः स्वराः सर्वे अपि तस्य दृष्ट्या समीचीनाः एव। किन्तु राज्याः उत्तमं सङ्गीतज्ञानम् आसीत्।

मन्त्रिणा देशस्य सङ्गीतविद्वांसः सामान्यप्रजाः च आहूताः, निर्णीते दिने सङ्गीतस्पर्धा आयोजिता च।

सङ्गीतस्पर्धा दिनत्रयं प्रचलिता। बहवः गायकाः स्पर्धायां भागं गृहीतवन्तः। आस्थानगायकपदवी प्राप्तव्या इति ते स्वस्वप्रतिभाः पूर्णतया प्रकटितवन्तः।

तेषु सङ्गीतविद्वत्सु राजा मुरलीनाथनामकं गायकं, राज्ञी वेणुनाथनामकं सङ्गीतविदुषं, मन्त्री सुसङ्गीतनामकं गायकं च निर्वाचितवन्तः। इदानीं पुनः समस्या उत्पन्ना- तेषु आस्थान-

विद्वान् भवितुं कः योग्यः ? इति ।

राजा स्वज्ञानं समर्थयन्, "मुरलीनाथस्य गायनं बहु सम्यक् आसीत् । तस्य कण्ठस्वरः अद्भुतः । तस्य गायने एव लीनः आसम् अहम् । साक्षात् सरस्वती एव तस्य कण्ठे वासं करोति इति वक्तुं शक्यते" इति उक्तवान् ।

तदा राज्ञी- "मुरलीनाथः किं, सुसङ्गीतस्य गायनम् अपि समीचीनतया एव आसीत् । किन्तु उभयोः अपि सङ्गीतविषये गभीरज्ञानं नास्ति । यस्य तादृशज्ञानं नास्ति सः विद्वान् इति न उच्यते । अतः एव वेणुनाथः एव समीचीनः गायकः इति अहं तमेव निर्वाचितवती" इति उक्तवती ।

तदा राजा मन्त्रिणं दृष्ट्वा "भवता सुसङ्गीतः निर्वाचितः किल ? तत् केन उद्देशेन ?" इति पृष्टवान् ।

"महाराज, सुसङ्गीतः न केवलं शास्त्रज्ञानं, सुश्राव्यं गायनकुशलतामपि जानाति । गायकेन पण्डिताः पामराश्च समानतया रञ्जनीयाः । तादृशं सामर्थ्यं केवलं सुसङ्गीतस्य एव । एषः अभिप्रायः न केवलं मम, अस्मिन् विषये पण्डिताः पामराः अपि साक्षीभूताः" इति उक्तवान् मन्त्री ।

एतत् वचनं श्रुत्वा राजा राज्ञी च आश्चर्येण "किम् ? सङ्गीतविदुषां, सामान्यसङ्गीतप्रियाणामपि अभिप्रायः वा ? तेषाम् अभिप्रायं भवान् कदा सङ्गृहीतवान् ?" इति पृष्टवन्तौ ।

तदा "एते त्रयः अपि सभायां यदा



गायन्तः आसन् तदा सभासदां व्यवहारः कथम् आसीत् इति भवद्भिः लक्षितं वा?" इति पृष्टवान् मन्त्री।

"मम मनः पूर्णतया मुरलीनाथस्य गायने संलग्नः आसीत्। तेन कारणेन अहं सभासदां व्यवहारं सर्वं न लक्षितवान्" इति उक्तवान् राजा।

"अहं वेणुनाथस्य गीतं शृण्वती तस्य सङ्गीतशास्त्रज्ञानेन आश्चर्यचकिता असम्। अतः अहम् अपि सभासदः न लक्षितवती" इति उक्तवती।

"अस्माभिः आस्थानविद्वान् इति यः निर्वाचितः तेन गायकेन न केवलं वयं त्रयः तोषणीयाः, अपि तु राज्यस्थाः सर्वे पण्डिताः पामराश्च स्वविद्यया तोषणीयाः। महाराजस्य अभिप्रायः अपि एषः एव स्यात् इति चिन्तयामि" इति उक्तवान् मन्त्री।

"सत्यम्, भवता युक्तम् उक्तम्। मम अभिप्रायः अपि सः एव" इति उक्तवान् राजा।

"यदा मुरलीनाथः गायन् आसीत् तदा पण्डिताः एकैकशः उत्थाय बहिः गतवन्त.। किन्तु सामान्यजनाः आनन्देन शिरः चालयन्तः अन्तपर्यन्तम् अपि उपविष्टाः आसन्। वेणुनाथस्य गायनसमये सामान्यजनाः समूहरूपेण बहिः गच्छन्ति स्म। केवलं पण्डिताः आसक्त्या उपविष्टाः एव आसन्। सुसङ्गीतस्य गानारम्भानन्तरं पण्डिताः सामान्याः च हर्षं प्रकटयन्तः गीतसमाप्तिपर्यन्तम् अपि अत्यासक्त्या उपविष्टाः एव आसन्। तेनैव कारणेन तेषु त्रिषु विद्वत्सु आस्थानगायकः भवितुं सुसङ्गीतः एव योग्यः इति उक्तवान्। इतःपरं राजा प्रमाणम्" इति उक्तवान् मन्त्री।

राजा राज्ञी च मन्त्रिणः अभिप्रायं सन्तोषेण अङ्गीकृतवन्तौ। सुसङ्गीतम् एव आस्थानगायकस्थाने नियोजितवन्तौ। अन्यान् पण्डितान् यथोचितं पारितोषिकादिभिः सम्मानितवन्तौ च।



# कांस्य-दुर्गम्



## १७

[चन्द्रवर्मा शिवपुरे प्रियसहचरं सुबाहुं दृष्टवान्। तद्द्वारा सेनापतेः धीरमल्लस्य वार्ता अपि ज्ञाता। सुबाहु-चन्द्रवर्मणोः वार्तालापस्य मध्ये कश्चन सेवकः पत्रम् आनीय दत्तवान्। पत्रद्वारा ज्ञातं यत् धीरमल्लः सर्पकेतोः बन्धने भवेत् इति परिस्थितिः आगता अस्ति इति। "इदानीं साहाय्यार्थं गमनम् एव उचितः मार्गः" इति उक्तवान् सुबाहुः। तदनन्तरं ......।]

'अस्यां सङ्कटपरिस्थितौ सुबाहुना यथा उक्तं तथा आचरणम् एव उचितम्' इति चिन्तितवान् चन्द्रवर्मा। अतः सः शिरश्चालनपूर्वकं सुबाहोः प्रस्तावम् अङ्गीकृतवान्। सुबाहोः त्वरिताज्ञया सर्वे सैनिकाः शस्त्रसन्नद्धाः सन्तः एकत्र सम्मिलिताः। चन्द्रवर्मणः नायकत्वे सर्वे तत्क्षणे एव युद्धार्थं प्रस्थिताः च।

एवं प्रस्थितं सैन्यं नगरप्राकारं दुर्गसीमां च अतिक्रम्य उत्तरदिशि अग्रे गतम्। सैन्यं द्विधा विभक्तम् आसीत्। एकस्य दलस्य नायकः चन्द्रवर्मा। अपरस्य दलस्य नायक सुबाहुः। आरात्रि सैन्यस्य गमनं कुत्रापि न स्थगितम्। सूर्योदयतः पूर्वं ते कस्यचित् पर्वतस्य मूलभागं प्राप्तवन्तः। अत्रान्तरे समीपतः एव अश्वानां खुरपुटध्वनिः श्रुतः। सुबाहुः चन्द्रवर्मा च गमनं स्थगितवन्तौ। सेना अपि क्षणकालं तत्रैव स्थिता।

'आगच्छन्तः मित्राणि उत शत्रवः!'



इति न ज्ञातम् आसीत्। अतः सुबाहुः चन्द्रवर्मा च दशभिः सैनिकैः सह वेगेन अग्रे गतवन्तौ। तदा निरन्तरप्रयाणेन श्रान्ताः चत्वारः सैनिकाः ताभ्यां दृष्टाः। ते सैनिकाः उषःकालस्य अस्पष्टप्रकाशे अपि सुबाहोः परिचयं प्राप्य उक्तवन्तौ- "सेनापते! सुबाहु-वर्य! समये भवतः दर्शनं प्राप्तम्। वयं धीरमल्लेन प्रेषिताः। सर्पकेतोः सैनिकाः नगरम् आगच्छन्तीम् अस्माकं सेनां वाममार्गेण आगत्य आक्रान्तवन्तः। सेनयोः मध्ये घोरं युद्धं प्रवृत्तम्। युद्धे अस्माकं सैनिकाः बहवः वीरस्वर्गं प्राप्तवन्तः। राजप्रतिनिधिः धीरमल्लः सर्पकेतोः सैन्यं शिवपुरस्य दिशि अग्रे यथा न गच्छेत् तथा अवरोधम् उत्पादयन् अस्ति। प्रायः एतत् जीवन्मरणनिर्णायकं युद्धम्। इतः-परं श्रुत्वा देवः प्रमाणम्" इति।

सैनिकानां वचनं यावत् समाप्तं तावता इतरे केचन अश्वारोहिणः तत्र वेगेन आगत-वन्तः। तेषु धीरमल्लः अपि अन्यतमः। सः सुबाहुसमीपम् आगत्य "सुबाहो! आगतः भवान्!! अस्माभिः एतत्क्षणे एव नगररक्षणार्थं प्रतिगन्तव्यम्। सर्पकेतुना सह युद्धं........" इति वदन् अकस्मात् चन्द्रवर्माणं दृष्टवान्। आनन्दातिरेकेण 'अहो!' इति उद्गारं प्रकटयन् अश्वात् भूमौ उत्प्लुतवान। धावन् आगत्य चन्द्रवर्मणः हस्तं गृहीत्वा "अहं स्वप्नं पश्यन् तु न अस्मि किल?" इति पृष्टवान्।

"धीरमल्ल! एषः न स्वप्नः, अपि तु वस्तुस्थितिः। भवतः दर्शनम् अस्मिन् जन्मनि पुनः भवेत् इति मम आशा अपि न आसीत्। कीदृशे विचित्रे सन्दर्भे सम्मिलिताः वयम्! विशेषवार्तालापार्थम् अपि समयः नास्ति। सुबाहुतः सर्वे विषयाः ज्ञाताः। वार्तालापं पुनः कदाचित् कुर्मः। शिवपुरस्य रक्षणम् आद्यं कर्तव्यम्" इति उक्तवान् चन्द्रवर्मा।

धीरमल्लः पुरतः स्थितं सैन्यम् एकवारं दृष्ट्वा, आत्मन पृष्ठतः स्थितं सैन्यम् अपि परिशीलितवान्। अनन्तरम् उत्साहेन "महाराज! भवतः आगमनेन परिस्थितिः परिवृत्ता। सर्पकेतुना सह अन्तिमं निर्णायकं



युद्धं कर्तुम् एषः दिव्यसमयः सन्निहितः। युद्धं नगरे वा भवितुम् अर्हति, पर्वतमार्गे वा भवितुम् अर्हति। यतः सर्पकेतुना सह केवलम् अश्वसैन्यम् अस्ति। पदातिसैन्यं दूरे अस्ति। अत्रान्तरे व्यूहं रचयितुं वयम् अवकाशं प्राप्तवन्तः चेत् अस्माकं विजयः सिद्धः इव'' इति उक्तवान्। सुबाहुम् उद्दिश्य ''सुबाहो! एतेन मार्गेण भवान् समग्रं सैन्यं पर्वतखातस्य अन्तः नयतु। खातस्य मुखं रक्षयितुं केचन आश्विकाः तिष्ठन्तु। केचन धनुर्धारिणः अपि रक्षणार्थं तत्रैव भवन्तु। अन्ये केचन शिलाः पातयितुं सिद्धाः भवन्तु। त्वर्यताम्'' इति आज्ञापितवान्। चन्द्रवर्मणा सह खातं प्रविष्टवान् च।

अल्पे एव काले समग्रा सेना खातं प्रविष्टवती। 'वीरपुरत्यागानन्तरं कानि कष्टसुखानि सम्मुखीकृतानि' इति विषयं चन्द्रवर्मा संक्षेपेण धीरमल्लुम् उक्तवान्।

तत्सर्वं सश्रद्धं श्रुत्वा धीरमल्लुः विनयेन उक्तवान्- ''महाराज! मया सुबाहुना च यत् कष्टम् अनुभूतं, शिवसिंहस्य आस्थाने यत् प्रवृत्तं, शिवपुरस्य वृत्तान्तं च सुबाहुः निवेदितवान् किल! इदानीं तु वयम् अकस्मात् सर्पकेतुना सह युद्धे प्रवृत्ताः। तेन दुष्टेन सह कदाचित् युद्धं करणीयम् आसीत् एव। स च सन्दर्भः इदानीम् एव प्राप्तः। राज्यं वा वीरस्वर्गः वा -किमपि एकं प्राप्तव्यम् अस्ति। अहं तु चिन्तयामि दैवम् अस्मदनुकूलकरम् इति। अतः एव किल भवान् अकस्मात् मिलितवान्?'' इति।

'धीरमल्लु! भवता युक्तम् एव उक्तम्। स्वदेशं त्यक्त्वा कियदिति वयम् एवम् अटामः! तेन किं वा प्रयोजनम्! अतः सैन्यं प्रोत्साहयतु। सर्पकेतोः अस्माकं वा अन्यतरस्य मरणं भवेत् एव। एतत् निर्णायकं युद्धम्'' इति उक्तवान् चन्द्रवर्मा।

एवं तयोः वार्तालापः यावत् प्रचलन् आसीत् तदा खातस्य द्वारप्रदेशे उत्पन्नः कोलाहलध्वनिः श्रुतः। रक्षणार्थं स्थिताः धनुर्धारिणः निरन्तरं बाणप्रयोगं कुर्वन्तः

आसन्। केचन आश्विकाः अश्वान् अग्रे प्रेरयन्तः हस्तस्थितेन शूलायुधेन खातं प्रवेष्टुम् उद्युक्तान् सैनिकान् मारयन्ति स्म। एवं पक्षीय-विपक्षीयानां जयकारेण आक्रन्दनेन हाहाकारेण च सः प्रदेशः व्याप्तः अभवत्। मृगाः पक्षिणः च भीत्या ततः पलायनं कृतवन्तः।

"महाराज! सर्पकेतुः खातं प्रवेष्टुम् उद्युक्तः अस्ति। सहस्रशः सङ्ख्यया स्थिताः तदीयाः आश्विकाः पदातयः च चिन्तयन्ति यत् कथञ्चित् खातं प्रविश्य वयं नाशनीयाः इति। इदानीं वयं उभयतः अपि आक्रमणं कुर्मः चेत् तेषां नाशः निश्चितः। अद्य मम खड्गस्य विशेषबलिः। रणचण्डयाः विशेषभोजनम्"

इति वदन् जयकारं कुर्वन् गर्जन् च धीरमल्लः अश्वम् आरूढवान्।

चन्द्रवर्मा अपि धीरमल्लम् अनुसृत्य जयकारं कुर्वन् एकेन उत्प्लवनेन अश्वस्य उपरि उपविष्टवान्।

चन्द्रवर्मा धीरमल्लः च क्षणमात्रेण सेनां द्विधा विभज्य पार्श्वद्वये स्थापितवन्तः। सुबाहुः कैश्चित् शूरैः आश्विकैः सह खातस्य द्वारप्रदेशं प्रति धावितवान्।

सर्पकेतोः सैनिकाः सामूहिकशक्त्या अति-सङ्कुचितं तं खातद्वारमार्गं प्रवेष्टुं विशेष-प्रयत्नम् आरब्धवन्तः। सहस्रशः जनानां शक्तिः एकत्रिता चेत् किं तत् सामान्यं वा? किन्तु सुबाहुपक्षीयाः अपि असाधारणाः एव।



प्राणान् तृणीकृत्य ते युद्धं कुर्वन्तः सन्ति। अतः शत्रुसैनिकाः द्वारसमीपे एव सुबाहोः तत्सहचराणां वा आयुधस्य आहाराः भवन्ति स्म। कथञ्चित् अग्रे आगताः चेत् चन्द्रवर्मणः धीरमल्लस्य च खड्गः तेषां प्राणान् निर्दयं पिबति स्म।

एवं घोरं युद्धं किञ्चित्कालं प्रवृत्तम्। शत्रुपक्षीयाः अपि मृताः। चन्द्रवर्मपक्षीयाः अपि मृताः। किन्तु मृतानां शत्रपक्षीयानां तु गणना एव नास्ति। तथापि शत्रुपक्षीयानां सङ्ख्या एव अधिकतया दृश्यते!

'अस्मत्पक्षीयाः केचन एव मृताः। तथापि शत्रुपक्षीयाः सर्वे अत्र उपस्थिताः चेत् तान् सम्मुखीकर्तुम् अस्माकं सैन्यशक्तिः न पर्याप्ता। तदा वयं इतोऽपि कष्टे पतामः किल!' इति चिन्तितवन्तौ चन्द्रवर्मा धीरमल्लः च।

'एतदर्थम् अन्यः उपायः कोऽपि चिन्तनीयः' इति यावत् तौ चिन्तयन्तौ आस्तां तदा सर्पकेतोः कठोरध्वनिः श्रुतः- "भो, भोः सैनिकाः! रणकेसरिणः! चन्द्रवर्मणः धीरमल्लस्य च शिरश्छेदं कुर्वन्तु। यः तयोः शिरः आनयति तस्मै लक्षसुवर्णनाणकानि दास्यामि। एतत्प्रदेशस्य माण्डलिकः अपि भविष्यति सः। देव्याः नाम्नि अहम् एवं शपथं करोमि। अतः सर्वे अग्रे सरन्तु। अकस्मात् मरणं प्राप्तं चेत् वीरस्वर्गः प्राप्यते। मृतानां कुटुम्बस्य आर्थिकव्यवस्थाम् अहं परिशीलयिष्यामि। अग्निपरीक्षायाः समयः एषः। वयम् एव जयं






प्राप्स्यामः'' इति। एवं सः क्षणे क्षणे सैनिकान् प्रोत्साहयन् आसीत्।

केचन सर्पकेतुना दीयमानस्य धनस्य आशया अग्रे गतवन्तः। अन्ये केचन- 'युद्धरङ्गात् पलायनं कुर्मः चेदपि सर्पकेतुः अस्मान् निर्दयं मारयिष्यति।। एवं तर्हि सधैर्यं युद्धं कृत्वा मृत्युमुखं प्रविश्य वीरस्वर्गं प्राप्नुमः'' इति चिन्तयन्तः उन्मत्ताः इव अग्रे धावितवन्तः। एवम् अग्रे गमनार्थं तेषां मध्ये एव स्पर्धा उत्पन्ना। अधः पतितानां व्रणितानाम् उपरि तत्पक्षीयाः एव अश्वं निर्दयं चालयन्ति स्म।

सुबाहोः साहाय्यार्थं धीरमल्लः इतोऽपि कांश्चन सैनिकान् प्रेषितवान्। तथापि शत्रवः अग्रे यथा न आगच्छेयुः तथा करणं कष्टकरम् इत्येव प्रतिभाति स्म।

अकस्मात् चन्द्रवर्मा स्वकीयम् अश्वं धीरमल्लस्य दिशि प्रेरयन्- ''धीरमल्ल! मम मनसि कश्चन उपायः स्फुरति। वयम् एताः शिलाः परिक्रम्य तत्पार्श्वं प्राप्य पृष्ठभागतः सर्पकेतोः सैन्यस्य उपरि लघु आक्रमणं कुर्मः। यदि शक्यं तर्हि केचन धनुर्धारिणः ततः बाणप्रयोगान् कुर्वन्तु। इतरे शिलाः पातयन्तु। तदा द्वारप्रदेशे एकत्रीकृतं सैन्यं सर्पकेतुना विभक्तव्यम् एव भविष्यति। सुबाहोः श्रमः न्यूनः भवेत्। सुबाहुः एगात्रता एव बहु श्रान्तः स्यात्। अतः प्रथमं तस्य साहाय्यं करणीयम्'' इति सूचितवान्।

''तदेव उचितम् इति भाति। अन्यः कोऽपि मार्गः न स्फुरति। शत्रुसैन्यं यदि कथञ्चित् खातं प्रविशेत् तर्हि पलायनार्थम् अपि वयम् मार्गं न प्राप्नुमः। उभयतः पाशारज्जुः इव भविष्यति अस्माकं परिस्थितिः'' इति उक्तवान् धीरमल्लः।

चन्द्रवर्मा कैश्चित् सर्वसमर्थैः सैनिकैः सह धनुर्धारिभिः च सह शिलाः अतिक्रम्य पर्वतम् आरूढवान्। सुरक्षिते स्थले स्थित्वा खातप्रदेशं दृष्टवान्। तत्रत्यं दृश्यं तावत् भीकरम् आसीत् यत् महाधैर्यशाली अपि क्षणकालं धैर्यच्युतः भवेत् एव।



सर्पकेतोः सहस्रशः आश्विकाः पदातयः च तत्र सम्मिलिताः सन्तः खातद्वारं प्रति प्रस्थिताः आसन्। "एतावतः महतः सैन्यस्य निवारणं कथं शक्येत? धीरमल्लः सुबाहुः इत्यादिभिः सह अहं पलायनं कर्तुं शक्नुयां चेदेव तत् महतः सौभाग्यस्य विषयः भवेत्। इतः कथञ्चित् गत्वा प्राणाः रक्षिताः चेदपि पुनरपि अरण्ये अटनम् एव शरणम्। तर्हि इदानीं किं करणीयम्!" इति तीव्रं चिन्तितवान् चन्द्रवर्मा।

एवं चिन्तयन् सः तदेकदृष्ट्या शत्रुसैन्यं पश्यन् आसीत्। तदा विद्युत् इव एका नूतना योजना तस्य मनसि स्फुरिता। झटितिः सः शत्रवः सर्वे यथा द्रष्टुं शक्नुयुः तथा उन्नतां शिलाम् आरुह्य स्थितवान्। अनन्तरं सर्वशक्तिम् उपयुज्य उच्चस्वरेण उद्घोषितवान्—

"भोः भोः सैनिकाः! अहं वीरपुरस्य माण्डलिकस्य सूर्यवर्मणः पुत्रः चन्द्रवर्मा। अधमाधमः सर्पकेतुः माहिष्मतीराजवंशं निर्मूल्य स्वयं चक्रवर्तिपदवीम् आरूढवान्। एतत् भवद्भिः ज्ञातम् एव। मम पितरम् एषः कथं मारितवान् इत्यपि भवन्तः जानन्ति। यशोवर्धनस्य पुत्रं तपोवर्धनं सिंहासने उपवेशयितुम् अहं प्रयत्नं कुर्वन् अस्मि। एतदर्थम् एव मम जीवनम्। यदि भवन्तः तं चक्रवर्तित्वेन न इच्छन्ति तर्हि भवन्तः यम् इच्छन्ति सः एव चक्रवर्ती भवतु नाम। एषः क्रूरः कपटी धूर्तः सर्पकेतुः प्रथमं बन्धने स्थापनीयः। वीरपुरस्य अभिमानिनः ये सन्ति ते अत्र साहाय्यं कर्तुम् अर्हन्ति। वीरपुराभिमानिनः राजवंशनिष्ठाः वीराः! एकत्रिताः भवन्तु ' इति।

एवं चन्द्रवर्मा यदा स्पष्टम् उद्घोषितवान् तदा बहवः सैनिकाः क्षणकाल स्तब्धाः अभवन्। सैन्यस्य एकभागतः "वीरपुरमहाराजः जयतात्" इति जयकारः श्रुतः।

सर्पकेतोः सैन्ये इदानीं कोलाहलः समुत्पन्नः। परस्परं नोदनं निन्दनं च प्रवृत्तम्। क्षणद्वयाभ्यन्तरे सर्पकेतोः सैन्ये स्पष्टतया भागद्वयं जातम्। एकः भागः चन्द्रवर्मणः दिशि आगन्तुम् उद्युक्तः।

चन्द्रवर्मणः दिशि आगच्छतः सैनिकान् निवारयन्तः केचन 'सर्पकेतुः जयतात्' इति जयघोषं कृतवन्तः। तदा चन्द्रवर्मपक्षपातिनः परिवृत्य स्थित्वा प्रत्याक्रमणं कृतवन्तः। एवं तयोः मध्ये एव परस्परं युद्धम् आरब्धम्।

चन्द्रवर्मा पर्वतात् अवतीर्य धीरमल्लसमीपम् आगत्य "धीरमल्ल! इदानीं सुवर्णावकाशः प्राप्तः। सर्पकेतोः सैन्यस्य महान् भागः अस्माकं पक्षे आगतः। इदानीं भवान् अस्माकं सैनिकान् विशेषतया प्रोत्साहयतु। यदि वयं खातस्य मुखद्वारम् अतिक्रम्य गन्तुं शक्नुमः तर्हि विजयः निश्चितः। सर्पकेतुः उभयसङ्कटे पतिष्यति। तत्रैव वयं तं नाशयेम। त्वर्यताम्" इति उक्तवान्।

एतदनुसारेण धीरमल्लः सैनिकान् प्रेरितवान्। सर्पकेतुः अग्रे उपस्थितां विपदं ज्ञातवान् एव।

'मम एव सैनिकाः इदानीं विरोधम् आचरन्ति। अतः विजयस्य आशा त्यक्तव्या' इति निश्चित्य सर्पकेतुः सैनिकान् प्रत्यागन्तुं आदिष्टवान्। विश्वासार्हैः कैश्चित् सैनिकैः सह युद्धरङ्गतः मौनं पलायनं कर्तुम् आरब्धवान् च।

चन्द्रवर्मा सर्पकेतोः पलायनतन्त्रं दूरतः एव ज्ञातवान्। अतः सः धीरमल्लेन सह सर्पकेतुम् अनुसृतवान्। मध्यह्नपर्यन्तम् अपि अनुसरणं प्रवृत्तम्।

शत्रुसैनिकाः केचन आश्विकाः पदातयः च चन्द्रवर्मपक्षीयैः बन्धने स्थापिताः। किन्तु सर्पकेतुः तस्य प्रधानसहचराः च पर्वतेषु धावन्तः सुदूरं पलायितवन्तः एव।

'इतःपरं स्वयम् अनुसरणेन प्रयोजनं नास्ति' इति चिन्तयित्वा चन्द्रवर्मा अनुसरणं स्थगितवान्। धीरमल्लः अपि तत्रैव स्थितवान्। अनन्तरं तौ पञ्च आश्विकान् दश पदातीन् च सर्पकेतोः गमनमार्गं ज्ञात्वा आगन्तुं प्रेषितवन्तौ।

—(आगामिसञ्चिकायां समाप्ता भविष्यति)






# कनकगुप्तस्य कथा

वेतालवहनं प्रवृत्तिं मन्यमानः त्रिविक्रमः पुनः वृक्षसमीपं गत्वा, शाखायां लम्बमानं शवम् अधः अवतार्य, स्कन्धे आरोप्य, यथापूर्वं मौनं श्मशानं प्रति प्रस्थितवान्। तदा शवान्तर्गतः वेतालः "भोः राजन्, महाघोरे अस्मिन् मध्यरात्रे, भयङ्करश्मशानस्थाने एकाकिनः भवतः कठोरश्रमं दृष्ट्वा मम आश्चर्यं, दया च जायते। यद्यपि इदानीं भवान् विजयी भवेत्, तथापि वृद्धावस्थायां भवदीयमनसः शान्तिम् एतत् कार्यं नाशयेत्। एतस्य निदर्शनरूपा अस्ति कनकगुप्तस्य कथा। धनिकः सः तारुण्ये महता श्रमेण सङ्गृहीतं धनं वार्धक्ये मानसिकदौर्बल्यात् उन्मत्तः इव परित्यक्तवान्। भवतः मार्गायासपरिहारार्थं तस्य कथां कथयिष्यामि, शृणोतु" इति उक्त्वा कथां वक्तुम् आरब्धवान्।

काञ्चीपुरवासी कनकगुप्तनामकः वणिक्

# वेतालकथा



दत्तवान् च। तैः पुत्रैः अपि पृथक् पृथक् वाणिज्यं कारयति स्म सः।

गच्छति काले, कनकगुप्तः वृद्धः जातः। तेन तस्य शरीरशक्तिः कुण्ठिता, न तु चिन्तनशक्तिः। "एतावत्पर्यन्तम् अहम् असङ्ख्यपापानि कृतवान्। एतेन कारणेन मरणानन्तरं मया भयङ्करनरकयातना अनुभोक्तव्या भविष्यति" इति तस्य मनसि भीतिः उत्पन्ना।

एवं हि सति 'नूतनतया आगतः कश्चित् योगीश्वरः नगरपरिसरे विद्यमाने शान्तिवने वसति। परमदयालुः, महात्मा च सः योगी स्वीयदर्शनार्थम् आगतानां समस्यानां समुचितान् परिहारोपायान् वदति'' इति कनकगुप्तः श्रुतवान्। तस्य अभिप्रायः प्रष्टव्यः इति सः निश्चितवान्।

अनन्तरं कनकगुप्तः शान्तिवनं गत्वा, योगीश्वरं नमस्कृत्य, स्वीयां समस्यां कथयितुम् उद्युक्तः।

अत्रान्तरे योगीश्वरः तस्य वचनप्रयत्नं निवारयन् "भवतः समस्तं वृत्तान्तम् अहं जानामि। भवदीयपापानां परिहारः अन्नदानेन भविष्यति। प्रतिदिनं शतं जनाः भोजयितव्याः। एवंक्रमेण दशसहस्रजनेभ्यः अन्नदानं करणीयम्। तदा एव भवान् पापात् मुक्तिं प्राप्स्यति" इति उक्तवान्।

विविधवाणिज्यैः शीघ्रम् एव कोट्यधीशः अभवत्। समुद्रवाणिज्यं, धान्यानां वस्त्राणां च वाणिज्यं तस्य आसीत् एव। किन्तु विशेषतः कुसीदव्यवहारेण सः अपरिमित लाभम् अर्जितवान्।

दयादाक्षिण्यशून्यः सः अधमर्णेभ्यः बलात् चक्रवृद्धिं स्वीकरोति। ये वृद्धिं दातुम् असमर्थाः, तेषां सम्पत्तीः अपहृत्य स्वायत्तीकरोति। अस्मिन् कार्ये सः सर्वदा जागरूकः। वृद्धिसम्बन्धिलेखपुस्तकम् एव तस्य देवता। धनसङ्ग्रहणस्य एव सदा ध्यानम्।

एवंरीत्या सम्पादितेन धनेन सः स्वसमानधनिकानां सम्बन्धं प्राप्य स्वीयपुत्रीणां विवाहान् कृतवान्। स्वीयसम्पत्तेः विभागं कृत्वा पुत्रेभ्यः



योगिनः वचनं श्रुत्वा कनकगुप्तः स्तब्धः अभवत्। प्रतिदिनं तावत् व्ययीकर्तुं सः न सिद्धः। पुत्राः अपि एतत् न अङ्गीकुर्वन्ति। वृद्धस्य मतिभ्रमः जातः इति वदेयुः।

"कृपया क्षाम्यतु स्वामिन्, तावत्प्रमाणकजनान् भोजयितुम् अहम् असमर्थः। किमपि उपायानन्तरं वदतु" इति प्रार्थितवान् कनकगुप्तः।

योगी स्मयमानः "अनेकवर्षेभ्यः कुसीदव्यवहारं कुर्वन् भवान् यथेष्टं पापम् अपि सम्पादितवान्। दशवर्षपर्यन्तं प्रतिदिनं शतजनान् भोजयितुं भवान् समर्थः अस्ति। तदनन्तरम् अपि भवतः सम्पत्तेः क्षतिः न भविष्यति इति अहं जानामि। किमर्थम् असत्यवचनम् उक्त्वा मम क्रोधं जनयति" इति उक्तवान् शान्तस्वरेण एव।

कनकगुप्तः किमपि अनुक्त्वा अवनतमुखः भूत्वा तूष्णीं स्थितवान्। योगी अपि किञ्चित् कालं मौनं स्थित्वा, किमपि मन्त्रं जप्त्वा, एकं रजतपात्रं सृष्ट्वा- "भोः कनकगुप्त! भवान् न केवलं पापी, अपि तु परमलोभी अपि। तथापि दयया भवते एतत् रजतपात्रं ददामि। एतत्पात्रद्वारा दिनत्रयं यावत् भवान् अन्नदानं कर्तुं शक्नोति। त्रिषु दिनेषु भवता दशसहस्रजनाः भोजयितव्याः। अवधेः पूर्वं भवता एतत्सर्वं करणीयम्। नो चेत् भवतः शिरः छिन्नं भविष्यति" इति उक्त्वा रजतपात्रं कनकगुप्ताय दत्तवान्।

कनकगुप्तः रजतपात्रस्य साहाय्येन अन्नदानं कर्तुम् आरब्धवान्। प्रातः आरभ्य रात्रौ दशवादनं यावत् अनेकजनाः तस्य गृहे भोजनं कृत्वा गच्छन्ति स्म। दिनद्वयं अतीतम्। तृतीयदिने रात्रौ दशवादनं सन्निहितम्। इतोऽपि दशजनाः भोजयितव्याः। योगिनः जागृतिवचनं कनकगुप्तस्य स्मरणे आसीत्।

सम्भ्रान्तः कनकगुप्तः धावन् नगरमार्गेषु यथाकथञ्चित् अष्ट जनान् अन्विष्य, गृहम् आनीय भोजनं कारितवान्। इतोऽपि द्वौ अपेक्षितौ। तदा एव गणनं सम्पूर्णं भवति।



जातः। सः आश्चर्यम् अनुभवन्, पाकगृहं प्रति धावन् गतवान्।

तत्र रात्रौ तेन परिविष्टानि खाद्यवस्तूनि कदलीपत्रद्वयेऽपि न आसन्। केनापि सर्वं खादितम् आसीत्। तत्रैव स्थापितं रजतपात्रम् अपि न आसीत्।

एतत् सर्वं कस्यचित् चोरस्य कार्यं स्यात् इति कनकगुप्तस्य संशयः जातः। सः शीघ्रं शीघ्रं स्वीयं धनसङ्ग्रहगृहं गतवान्। तस्य संशयः यथार्थः आसीत्। रात्रौ पाकगृहे भोजनं समाप्य, धनाभरणादीनि सर्वाणि वस्तूनि अपहृत्य गतवान् आसीत् चोरः।

कनकगुप्तः भयाविष्टः भूत्वा क्षणद्वयं अचलं स्थित्वा, प्रकोष्ठतः बहिः आगतवान्। द्वारे कश्चित् स्थित्वा तम् आह्वयन् आसीत्। सः शीघ्रं गत्वा द्वारम् उद्घाटय बहिः दृष्टिं प्रसारितवान्।

गृहस्य पुरतः जनानाम् एकः समूहः स्थितः आसीत्। तेषु केचन बद्धौ द्वौ सुपुष्टौ चोरौ कनगुप्तस्य समीपम् आनीय "भोः महाभाग, एतौ प्रातः प्रथमयामे भवदीयगृहस्य पृष्ठभागतः आगच्छन्तौ दृष्टौ। 'एतौ चोरौ वा?' इति अस्माकं संशयः उत्पन्नः। वस्तुतः एतौ चोरौ एव। एतयोः समीपं स्थितम् एतत् ग्रन्थिद्वयं पश्यतु" इति उक्तवन्तः।

कनकगुप्तः पश्यति — सर्वं स्वीयं धनम्

किं करणीयम्?

कालः धावन् अस्ति। कनकगुप्तः बहु-दीर्घम् आलोचितवान्। अनन्तरं पाकगृहं गत्वा, तत्र कदलीपत्रद्वयम् एकत्र स्थापितवान्। रजतपात्रस्य साहाय्येन द्वयोः पत्रयोः खाद्य-वस्तूनि परिविष्य, भगवतः ध्यानं कुर्वन् मरण-भयम् अनुभवन्, शयनगृहं गत्वा शय्याम् आश्रितवान्।

सूर्योदयः जातः। पशुपक्षिगणानां कलरवैः, मार्गेषु गच्छतां जनानां कोलाहलध्वनिभिः, वाहनानां कर्कशशब्दैः च कनकगुप्तः जागृतिं प्राप्य नेत्रे उन्मील्य दृष्टवान्। प्रप्रथमं स्वीय-शिरः स्पृष्टवान्। इदानीम् अपि अहं जीवन् अस्मि इति ज्ञात्वा तस्य अपरिमितः सन्तोषः

एव ! स्वीयानि आभरणानि एव !! तथापि सः स्वयम् एव पुनः धनाभरणादिसहितं ग्रन्थिद्वयं पूर्ववत् बद्ध्वा, चोरयोः भुजान् अस्फाल्य "भयं मास्तु, एतत्सर्वं भवतोः एव" इति उक्तवान्।

वेतालः अत्र कथां समाप्य "भोः राजन्, कनकगुप्तस्य प्रवर्तने भवतः अभिप्रायः कः ? दुर्मार्गम् अनुसरन्, अधर्मेण पापकर्माणि कुर्वन् सम्पादितं धनं चोरयोः हस्ते एव दत्तवान्। एतत् वार्धक्ये जातं मानसिकदौर्बल्यं खलु ? अथवा आत्मनः प्राणरक्षकौ इति चोरयोः विषये कृतज्ञता वा ? एतस्य संशयस्य उत्तरं जानन् अपि न वदति चेत् भवतः शिरः सहस्रधा भग्नं भविष्यति" इति उक्त्वा तूष्णीम् अभवत्।

तदा त्रिविक्रमः उक्तवान्· "कनकगुप्तः प्राणभयेन योगीश्वरस्य दर्शनं न कृतवान्। अत्र एषः विषयः प्रधानतया लक्षयितव्यः। स्वकृतपापानां परिहारम् अकृत्वा मरणं प्राप्नोमि चेत्, नरकयातना भोक्तव्या भविष्यति इत्येव तस्य समस्या। योगीश्वरः परिहारमार्गं सूचितवान्। त्रिषु दिनेषु दशसहस्रजनाः भोजयितव्याः। तृतीयदिने द्वौ न्यूनौ जातौ। तदा स्वीयमरणं निश्चितम् इति सः चिन्तितवान्। नियमस्य वैफल्येन मरणानन्तरम् अपि नरकयातना अपि अनिवार्या इति सः भीतः। किन्तु अन्ते द्वयोः चोरयोः कारणेन मरणम् अपि निवारितम्। नरकयातनायाः अपि भयं नास्ति। एतस्मात् कारणात् एव स्वीयगृहे चोरितं धनाधिकं चोराभ्याम् एव आदरपूर्वकं प्रदत्तवान्। कनकगुप्तस्य नरकभयम् एव। न तु प्राणभयम्। तस्य मानसिकदौर्बल्यं तु सुतरां नास्ति। धनविषये अपि तस्य न तथा चिन्ता" इति।

एवंरीत्या यदा त्रिविक्रमस्य मौनभङ्गः जातः, तदा शवसहितः वेतालः अदृश्यः भूत्वा पुनः अपि यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






# चतुरः भीमशङ्करः

कस्मिंश्चित् ग्रामे भीमशङ्करः नाम युवकः आसीत्। सः अतीवबुद्धिमान्। एकदा सः बान्धवस्य विवाहार्थं पार्श्वग्रामं गतवान्। तत्र विवाहभोजनादिकं सर्वं समाप्य सायङ्कालसमये स्वग्रामं प्रत्यागच्छन् आसीत्। एवम् आगमन-समये मध्ये अरण्यं प्राप्तम्। तत्समये अकस्मात् वृष्टिः अपि आरब्धा। वृष्टितः आत्मनः रक्षणम् इच्छन् सः परितः दृष्टिं प्रसारितवान्। समीपे एव तेन एकं पुरातनं भवनं दृष्टम्।

भीमशङ्करः तत् भवनं प्रविष्टवान्। भवने बहु प्रकोष्ठाः दृष्टाः। भीमशङ्करः एकस्मिन् प्रकोष्ठे उपविष्टवान्। किञ्चित् कालानन्तरं पञ्चविंशतिचोराः तत्र आगतवन्तः। अश्वान् आरुह्य आगताः ते चोराः अश्वेभ्यः अवतीर्य काष्ठतण्डुलादीनि पाकसाधनानि गृहस्य अन्तः आनीतवन्तः। चोरनायकः सहचरान् आदिष्टवान्- "एषा वृष्टिः शीघ्रं स्थगिता न भवेत्। अतः अद्य रात्रौ अत्र एव निवसाम। भूरिभोजनं व्यवस्थापयन्तु" इति।

चौरेषु त्रिचतुराः पाककार्यम् आरब्धवन्तः। शिलाभिः चुल्लीं निर्माय भूरिभोजनं सज्जीकृतवन्तः। घण्टात्रयाभ्यन्तरे पाकः सिद्धः। पाकस्य सुगन्धः भवने सर्वत्र व्याप्तः। भवनस्य कोणे अन्धकारे उपविष्टस्य भीमशङ्करस्य बुभुक्षा पाकगन्धेन द्विगुणिता अभवत्। मुखतः लाला स्रवति च।

भीमशङ्करः स्वभावतः धैर्यशाली। बुद्धिः पारदः इव। विशिष्टा समयस्फूर्तिः। सः इतरे यथा न जानीयुः तथा मन्दम् उत्थाय तेषां चोराणां वस्त्रबन्धस्य समीपं गतवान्। ततः एकं वस्त्रयुगलं चोरयित्वा धृतवान् च। इदानीं भीमशङ्करः अपि चोरः इव दृश्यते।

भोजनसमयः आसन्नः। भोजनशालायां



पङ्क्तिशः भोजनपात्राणि स्थापितानि। अनन्तरं एकः 'भोजनार्थम् आगच्छन्तु' इति सूचनां दत्तवान्। सर्वे आगत्य उपविष्टवन्तः। भीमशङ्करः अपि तेषां मध्ये उपविष्टवान्। भोजनशालायां दीपप्रकाशः मन्दः आसीत्।

चोरनायकः उपविष्टान् गणयित्वा उक्तवान्- "वयम् आहत्य षड्विंशतिः जनाः किल? चत्वारः पाककार्ये नियुक्ताः चेत् अवशिष्टाः द्वाविंशतिः। अत्र तु त्रयोविंशतिः जनाः दृश्यन्ते। एवं तर्हि अस्मासु कश्चित् अन्यः प्रविष्टः अस्ति। वञ्चकः कः एषः अन्यः?" इति।

नायकस्य वचनं श्रुत्वा सर्वे आश्चर्यचकिताः सन्तः संशयदृष्ट्या परस्परं मुखं दृष्टवन्तः। तदा चोरनायकः सर्वान् पश्यन् "अन्यस्य ग्रहणं न तथा कष्टकरम्। तदर्थं सुलभोपायः अस्ति" इति उक्त्वा स्वकीयं मुख्यसहचरम् समीपम् आहूतवान्। अन्यान् आदिष्टवान् च- "आवां पार्श्वप्रकोष्ठे भवावः। भवन्तः एकैकशः अन्तः आगच्छन्तु। एकैकम् अपि तप्तया अयः-शलाकया दाहयामि। यः वेदनया आक्रन्दनं करोति सः एव नूतनः। तं शूलम् आरोपयिष्यामि" इति।

अनन्तरं चोरनायकः प्रधानानुचरः च पार्श्वस्थं प्रकोष्ठं गतवन्तौ। चोराः एकैकशः तत्र गतवन्तः। यदा एकः प्रविशति तदा 'हा हन्त!' इति ध्वनिः श्रूयते। चोरनायकः अपरम् आह्वयति।

भीमशङ्करः बुद्धिमान् किल? 'चोरनायकः कमपि अयःशलाकया न दाहयति' इति सः ज्ञातवान् एव। आत्मनः पर्यायः यदा आगतः तदा सधैर्यं तत्प्रकोष्ठं प्रविष्टवान्। चोरनायकस्य मुख्यानुचरः 'हा हन्त!' इति मन्दम् उच्चरन् एतं भित्तेः पार्श्वे उपवेशितवान्। एवं सर्वेषाम् अपि परीक्षा समाप्ता।

तदा चोरनायकः पुनः उक्तवान्- "अस्मासु प्रविष्टः नूतनः महाचतुरः इव दृश्यते। अतः एषः मम उपायः न फलितः। अतः इदानीम् एवं करोमि– अहं पार्श्वप्रकोष्ठे भवामि। भवत्सु एकैकः अपि आगत्य अद्यतनं

शब्दसङ्केतं माम् उक्त्वा गच्छतु'' इति।

चोरनायकः पार्श्वप्रकोष्ठं गतवान्। 'इदानीं कथम् अहं शब्दसङ्केतं जानामि?' इति भीमशङ्करः किञ्चित् चिन्तितवान्। तदा सः पाकक्रियायां मग्नेन स्वसाहाय्यकं प्रति उक्तं 'भवान् तु महाविस्मरणशीलः' इति वचनं श्रुतवान्।

भीमशङ्करः तस्य विस्मरणशीलस्य समीपं गत्वा ''भवान् तु जन्मना विस्मरणशीलः। तं शब्दसङ्केतं विस्मृतवान् तु न किल?' इति मन्दस्वरेण पृष्टवान्।

तदा सः कोपेन इव ''हं हो हं हो इति एतावत् अपि न स्मरेयं वा? किं वदति भवान्'' इति उक्तवान्।

भीमशङ्करः अपेक्षितं रहस्यं ज्ञातवान् एव। स्वपर्यायसमये चोरनायकस्य पुरतः गत्वा ''हं हो हं हो'' इति उक्तवान्।

सर्वे चोराः शब्दसङ्केतम् उक्त्वा गतवन्तः। अनन्तरं चोरनायकः उक्तवान्- ''हन्त! अस्मासु प्रविष्टः नूतनः निश्चयेन महानिपुणः! तस्य चातुर्येण अहं अतीव सन्तुष्टः अस्मि। सः निस्सङ्कोचम् अग्रे आगत्य आत्मनः परिचयं वदतु। तस्मै भूरिभोजनं पारितोषिकं च दत्त्वा तं प्रेषयिष्यामि। अत्र कालिकामाता एव प्रमाणम्'' इति।

तदा भीमशङ्करः अग्रे आगत्य चोरनायकं नमस्कृत्य प्रवृत्तं सर्वं निवेद्य उक्तवान्- ''वस्तुतः मम अतीव बुभुक्षा। भवतां पाकस्य सुगन्धः एतत्साहसस्य प्रेरकः अभवत्'' इति।

तदा चोरनायकः उच्चैः हसन् उक्तवान्- ''भोः, पाकस्य सुगन्धं किं रुचिम् अपि आस्वादयतु भवान्। आगच्छतु। मम पार्श्वे एव उपविशतु। अद्यतनः अतिथिः भवान्'' इति।

भीमशङ्करः आतृप्ति भोजनं कृतवान्। चोरनातकः भोजने मध्ये मध्ये अनुरोधं करोति स्म। भोजनानन्तरं दश सुवर्णनाणकानि दत्त्वा भीमशङ्करं गौरवपूर्वकं प्रेषितवान्।





अस्माकं देवालयाः–

# सोमनाथमन्दिरम्

पूर्वं चन्द्रस्य वृद्धिः क्षयः वा न आसीत्। आवत्सरं सः कान्त्या विलसति स्म। जगदानन्ददायकस्य एतस्य विषये जनानां विशेषगौरवम् आसीत्।

चन्द्रः दक्षप्रजापतेः जामाता। एषः कदाचित् धर्ममार्गम् अतिक्रम्य गतवान्। तेन कुपितः दक्षः "भवान् क्षयं प्राप्नोतु" इति शापं दत्तवान्।





यावत् चन्द्रः पूर्णतया न क्षीणः ततः पूर्वम् एव देवाः आगत्य शापम् उपसंहर्तुं दक्षं प्रार्थितवन्तः। किन्तु दक्षः शापं प्रतिस्वीकर्तुम् असमर्थः आसीत्। अतः सः शापस्य तीव्रतां न्यूनीकृतवान्। तदनुगुणं चन्द्रः मासे पञ्चदशदिनानि यावत् क्षीयते, पुनः पञ्चदशदिनानि यावत् वर्धते च।



“पवित्रे समुद्रे स्नानं कृत्वा शिवं ध्यायतु । तेन भवतः हितं सिध्यति” इति देवाः चन्द्रं सूचितवन्तः । चन्द्रः तथैव कृतवान् । तद्द्वारा सः नष्टं तेजः पुनः प्राप्तवान् । चन्द्रः यत्र स्नानं कृतवान् तत् स्थलं ‘प्रभासक्षेत्रम्’ इति नाम प्राप्नोत् ।

चन्द्रः किञ्चित्कालं यावत् प्रभासक्षेत्रे शिवं पूजितवान् इत्यतः तत्रत्याः जनाः शिवं सोमनाथनाम्ना पूजयितुम् आरब्धवन्तः ।





प्रभासक्षेत्रे सर्वप्रथमं शिवमन्दिरं कदा निर्मितम् इति वयं न जानीमः । क्रि.श. ६-७ शतके तत्प्रान्तस्य परिपालकः धारासेनः (चतुर्थः) शिथिलावस्थायां स्थितं प्राचीनमन्दिरं निष्कास्य नूतनं मन्दिरं निर्मितवान् ।

नवमे शतके एतस्य देवालयस्य पुनर्निर्माणं प्रवृत्तम्। तदारभ्य एतत् पवित्रयात्रास्थलम् इति ख्यातम्। सहस्रशः यात्रिकाः अत्र आगन्तुम् आरब्धवन्तः। धनिकाः, सामान्याः शासकाः च स्वशक्त्यनुसारं सुवर्णाभरणानि मन्दिराय समर्पितवन्तः। मन्दिरं परितः आपणाः वसतिगृहाणि च निर्मितानि।





एकादशे शतके गजनी मोहम्मदः भारतस्य उपरि दण्डयात्रां कृतवान्। सः सोमनाथदेवालये स्थितस्य रत्नराशेः विषयं श्रुतवान् आसीत्। अतः सः सोमनाथदेवालयं प्रति सैन्यं चालितवान्।

एषा वार्ता तत्रत्यैः पौरैः ज्ञाता। तत्प्रान्तस्य पालकः देवालयस्य रक्षणार्थं सैनिकान् प्रेषितवान्। अल्पसङ्ख्याकाः एते सैनिकाः मोहम्मदस्य महत्या सेनया पराजिताः अभवन्। सामान्यपौराः अपि दुराक्रमणं सम्मुखीकुर्वन्तः प्राणान् अर्पितवन्तः।





'देवालये स्थितानि सुवर्णाभरणानि रत्नानि च यथेष्टं स्वीकरोतु। किन्तु मूलविग्रहमात्रं न स्पृशतु' इति पूजका: भक्ता: च दुराक्रमणकारिण: प्रार्थितवन्त:। किन्तु गजनी मोहम्मदस्य सैनिंका: तु तां प्रार्थनां निर्लक्ष्य निरायुधान् तान् निर्दयं मारितवन्त:।

पञ्चाशत्सहस्रजनानां मरणानन्तरम् एव मोहम्मदस्य सैनिका: देवालयं प्रवेष्टुं शक्ता: अभवन्। ते विग्रहं देवालयं च नाशयन्त: निरीक्षापेक्षया अधिकं धनराशिं विलुण्ठ्य नीतवन्त:।







एतदनन्तरं पुनर्निर्मित: देवालय: १३ शतके अल्ला उद्दीन् खिल्जिना नाशित:। तदनन्तरं निर्मित: देवालय: अष्टादशे शतके औरङ्ग जेबस्य शासनकाले नाशित: अभवत्। एतदनन्तरम् इन्दोरराज्ञी अहल्याबायी पुन: देवालयं निर्मापितवती। सद्य: निर्मितस्य नूतयदेवालयस्य प्रारम्भोत्सव: १९५१ तमे वत्सरे प्राचलत्।




पूर्वं स्विजर्ल्याण्डदेशे कश्चित् राजा आसीत्। तस्य एका पुत्री। पुत्राः न सन्ति। पुत्रप्राप्त्यर्थं सः बहून् देवान् प्रार्थितवान्। किन्तु तेन किमपि प्रयोजनं न सिद्धम्। अतः राजा पुत्रीम् एव पुत्रवत् पालयन् धनुःखड्गादिविद्याः पाठितवान्। प्रीत्या पोषितवान् च।

एकदा पिता पुत्री च मृगयार्थं गतवन्तौ। मार्गे तौ सर्पैः प्रीत्या लालयन्तीं चुम्बन्तीं च काञ्चित् वृद्धां दृष्टवन्तौ। राजकुमारी एतत् दृष्ट्वा- "छी! किमिदम असह्यम्! अनागरिकम्!" इति जुगुप्सां प्रकटीकृतवती।

एतत् सा वृद्धा श्रुतवती। कोपेन सा राजकुमारीम् आपादमस्तकं पश्यन्ती- "एतस्य प्राणिनः विषये भवत्याः जुगुप्सा वा? एवं तर्हि भवती अपि सर्पः भवतु" इति उक्त्वा दक्षिणहस्ते स्थितया शलाकया तां स्पृष्टवती। यावत् राजा वृद्धां शापदानात् निवारयितुम् उद्युक्तः, ततः पूर्वम् एव राजकुमारी विकृतध्वनिना आक्रन्दनं कृतवती, सर्परूपतां प्राप्तवती च।

वृद्धा एतावता अपि न तृप्ता। "इतःपरम् अत्र भवत्याः किं कार्यम्? अपसरतु इतः" इति वदन्ती सा सर्पं पुनः शलाकया स्पृष्टवती। सर्पः सशब्दं ततः अधावत्।

अकस्मात् घटितया एतया घटनया राजा क्षणकालं स्तब्धः। अनन्तरं कोपावेशेन खड्गम् आकृष्य वृद्धां मारयितुम् उद्युक्तः अभवत्।

वृद्धा तु निर्भयेन हस्तस्थितां शलाकाम् उन्नीय- "भोः जागरूकः भवतु। पुत्री यां गतिं प्राप्तवती सा एव गतिः भवेत् भवतः अपि" इति गर्जितवती।

शापात् भीतः राजा शुनकः इव विनम्रः अभवत्। अनन्तरं वृद्धां नमस्कुर्वन्, पादयोः पतन् विविधरीत्या प्रार्थितवान्। शापम् उप-

"स्विड्जर्ल्याण्डदेशस्य जानपदकथा"



मन्त्रितवती। 'एषः अक्षयकिरीटः' इति वदन्ती तं किरीटं सर्परूपिण्याः राजकुमार्याः शिरसि स्थापितवती।

कालान्तरे किरीटस्य माहात्म्यं सर्वत्र प्रसृतम् अभवत्। 'यत्र किरीटः तिष्ठति तत्र दारिद्र्यं न भवति' इति वार्ता शरवेगेन व्याप्ता। "यदि धान्यराशौ स्थाप्येत तर्हि धान्यानि अक्षयानि भवन्ति, धनपेटिकायां स्थापितः चेत् धनं कदापि न न्यूनीभवति" इति विविधाः कल्पनाः लोके उद्भूताः। एतस्य किरीटस्य प्राप्त्यर्थं बहवः बहुविधप्रयत्नान् आरब्धवन्तः।

संहर्तुं निवेदितवान् च। एतेन वृद्धा किञ्चिदिव शान्ता।

"अहं मन्त्रप्रयोगं केवलं जानामि, न तु उपसंहारम्। अतः एवं भवतु- अहं भवतः पुत्रीं सर्पाणां राज्ञीं करिष्यामि। भवान् तस्याः कृते एकं लघुकिरीटं निर्माय आनयतु। दिनत्रयाभ्यन्तरे किरीटः सिद्धः भवेत्। यावत् किरीटः न नश्यति तावत् भवतः पुत्री सर्परूपेण स्थास्यति। किरीटनाशे सा मानवरूपतां प्राप्स्यति। किरीटम् उत्तमेन सुवर्णेन एव कारयतु" इति उक्तवती सा वृद्धा।

अनन्योपायः राजा दीर्घं निश्वसन् ततः गतवान्। वृद्धायाः वचनानुसारं लघु किरीटं निर्माय दत्तवान्। वृद्धा तं किरीटम् अभि-

एकदा कश्चित् निर्धनः कृषिकः अरण्यमार्गेण गच्छन् आसीत्। मार्गमध्ये सः पिपासितः अभवत्। जलपानार्थं सः समीपस्थं सरोवरं गतवान्। सरोवरे कश्चन सर्पः तरन् तेन दृष्टः। सरोवरतीरे प्रकाशमानः लघुकिरीटः अपि तेन दृष्टः। 'एषः एव नागकिरीटः' इति सः तर्कितवान्। झटिति जलं पीत्वा किरीटम् उन्नीय ततः पलायितवान्।

एतत् ज्ञात्वा सर्पराज्ञी इतरे सर्पाः च तम् अनुसृतवन्तः। अग्रे धावितुम् अशक्तः कृषिकः पार्श्वस्थं वृक्षम् आरुह्य स्थितवान्।

कृषिकः यथा न अवतरेत् तथा सर्पाः वृक्षं परितः सञ्चरन्तः तत्रैव स्थितवन्तः।

अत्रान्तरे काचित् स्त्री तत्र आगतवती।

"किं भोः ! किमर्थं वृक्षम् आरूढवान् ?" इति पृष्टवती च।

तदा कृषिकः प्रवृत्तं सर्वं निवेद्य "एतेषां सर्पाणाम् अपसारणार्थं कः उपायः इति अहं न जानामि" इति उक्तवान्।

"सर्पनिवारणार्थम् अहं मन्त्रं जानामि। अतः सर्पाः मां न पीडयन्ति। यदि भवान् भवतः समीपे स्थितं नागकिरीटं दद्यात् तर्हि अहं एतान् सर्पान् निवारयेयम्। तेन भवान् अपि उज्जीवितः भवेत्" इति उक्तवती सा।

"किरीटविषयम् अनन्तरं चिन्तयाम। भवती प्रथमं सर्पान् निवारयतु" इति उक्तवान् कृषिकः।

सा स्त्री कमपि मन्त्रम् उच्चरितवती। तदा सर्पाः सर्वे ततः निर्गताः। अनन्तरं कृषिकः वृक्षात् अवतीर्य ताम् उक्तवान्- "मम तु कौटुम्बिकदायित्वम् अस्ति। अतः एतेन किरीटेन मम विशेषोपयोगः भवेत्। यदि इच्छति, भवती अपि बन्धुभिः सह मया सह मम गृहे तिष्ठतु। भवत्याः काऽपि न्यूनता यथा न स्यात् तथा व्यवस्थां करोमि" इति।

अनिवार्यतया सा एतं प्रस्तावम् अङ्गीकृतवती। यतः सा अपि एकाकिनी।

कृषिकः नागकिरीटस्य प्रभावेण धनधान्यादीनाम् अभिवृद्धिं प्राप्नुवन् सुखेन आसीत्। सा स्त्री किरीटस्थापनस्थलं यथा न जानीयात् तथा जागरूकतया व्यवहरति स्म सः। तथापि एकदा सा किरीटस्थापनस्थलं



ज्ञातवती एव। कदाचित् कृषिकस्य अनुपस्थितौ किरीटं स्वीकृत्य स्वगृहं प्रति पलायितवती। 'तस्याः गृहं कुत्र?' इति कृषिकः न जानाति।

इदानीं तस्याः स्त्रियः सौभाग्यम्! सा तं किरीटं धान्यसङ्ग्रहे स्थापितवती। तेन प्राप्तया धान्यसमृद्ध्या यथेष्टं धनं सम्पादितवती च।

एकदा सा यदा पेषणार्थं धान्यानि प्रेषितवती तदा धान्यैः सह किरीटः अपि गतः। पेषणयन्त्रे पतितः च।

'यावत्कालं यन्त्रं चाल्यते चेदपि निरन्तरं पिष्टम् आगच्छत् एव अस्ति किल?' इति आश्चर्यम् अनुभूतवान् यन्त्रस्वामी। 'किम् एतत् विपरीतम्!' इति वदन् यन्त्रे स्थापितं धान्यराशिं सः आलोडितवान्। तदा सः तत्र नागकिरीटं प्राप्तवान्। सन्तुष्टः सः तं किरीटं स्वधनपेटिकायां स्थापितवान्।

अत्रान्तरे सा स्त्री आगत्य 'मम एकं सुवर्णाभरणं न दृश्यते। तत् अत्र एव आगतम्' इति विवादम् आरब्धवती। यन्त्रस्वामी 'अहं किमपि न जानामि' इति उक्तवान्। तत्र सर्वत्र अन्विष्य निराशा सा स्त्री गृहं प्रतिगतवती।

इदानीं यन्त्रस्वामिनः मनसि एका आलोचना आगता- "नागकिरीटं यदि धान्यराशौ स्थापयामि तर्हि यथेष्टं पिष्टं प्राप्तुं शक्नोमि। तेन विशेषतया धनसम्पादनम् अपि भविष्यति' इति। एतदनुगुणं कृत्वा सः बहुधनं सम्पादितवान् अपि। किन्तु एकदा अजागरूकतया धान्यराशौ स्थितः नागकिरीटः कथमपि यन्त्रचक्राणां मध्ये गतः, चूर्णीभूतः च। तत्क्षणतः यन्त्रतः पिष्टोत्पत्तिः स्थगिता।

नागकिरीटस्य निर्मूलनेन नागराज्ञीरूपेण स्थिता राजकुमारी मानवरूपं प्राप्तवती। सा तद्दिने एव पितुः समीपं गतवती, सर्वान् सन्तोषितवती च। अनन्तरं योग्यं वरं परिणीय सुखेन जीवितवती।






दिवोदासस्य समीपं गतः ब्रह्मा अपि यदा न प्रत्यागतः, तदा शिवः प्रमथगणान् काशीं प्रेषितवान् । काशीक्षेत्रं प्रविष्टाः प्रमथगणाः अपि सम्पूर्णरूपेण आगमनकारणं विस्मृतवन्तः । तेषु अन्यतमः कपर्दिनामकः काश्यां कपर्दीश्वर-नामकं शिवलिङ्गं प्रतिष्ठापितवान् ।

काश्यां यत् प्रवृत्तं तत् मन्दरपर्वतस्य उपरि स्थितः शिवः न ज्ञातवान् । सः विनायकम् आहूय, आवश्यकविचारान् उपदिश्य तं काशी-नगरं प्रेषितवान् ।

विनायकः काशीनगरं गत्वा तत्र अनेकान् उत्पातान् उत्पादितवान् । अनन्तरं सः दिवो-दासस्य भवनं प्रविष्टवान् । तत्र महाराजेन अनेके प्रश्नाः पृष्टाः । सर्वेषां प्रश्नानाम् उचितानि उत्तराणि विनायकः दत्तवान् । तदा विनायकः तत्रत्य राजपुरोहितेषु अन्यतमः अभवत् ।

एकदा महाराजः ढुण्ढिभट्टारकं "काशी-नगरे उत्पातानां किं कारणं स्यात् ?" इति पृष्टवान् ।

"राजन्, किञ्चित्कालं यावत् काशीनगरात् बहिः कुत्रचित् भवतः वासः उचितः इति मन्ये । इतः अष्टादशदिनानन्तरम् उत्तरदेशतः एकः ब्राह्मणः आगमिष्यति । सः एव उचितं हितोपदेशं दास्यति" इति उक्तवान् ढुण्ढिः ।

अनन्तरं शिवः विष्णुमूर्तिं काशीनगरं प्रेषितवान् । विष्णुमूर्तिः वृद्धस्य वेषं धृत्वा काशीनगरस्य पौरान् नास्तिकमतं, बौद्धधर्मं,

"१५. काशीक्षेत्रे व्यासः"



जैनधर्मं च उपदिश्य, तेषां धर्मविषयकचिन्तनं भ्रष्टं कृतवान्। तदनन्तरं विष्णुः ब्राह्मणवेषधारी भूत्वा दिवोदासस्य समीपं गत्वा आशीर्वचनानि उक्तवान्।

दिवोदासः तं ब्राह्मणम् उद्दिश्य "भोः आर्य, देवताः मां बहुप्रकारैः पीडयन्ति। तेन बहु श्रान्तः अस्मि। किञ्च अहम् अपि दीर्घकालतः राज्यशासनं कुर्वन् वृद्धः जातः। इदानीं मोक्षम् इच्छामि। मोक्षप्राप्तेः कः मार्गः? भवान् जानाति वा?" इति पृष्टवान्।

"राजन्! काशीनगरे शिवलिङ्गस्य प्रतिष्ठां कारयतु। तस्य पुण्यकार्यस्य प्रभावेण भवान् सशरीरं कैलासं प्राप्नोति" इति उक्तवान् ब्राह्मणरूपधारी विष्णुः। तस्य वचनम् अनुसृत्य दिवोदासः स्वपुत्रस्य समरञ्जयस्य राज्याभिषेकं कृत्वा, एकं बृहद्देवालयं निर्मापितवान्। तस्मिन् देवालये शिवलिङ्गस्य प्रतिष्ठाम् अपि कारितवान्। अनन्तरं देवलोकतः समागतं विमानम् आरुह्य मर्त्यशरीरसहितः एव कैलासं गतवान्। तदा पूर्वं काशीं परित्यज्य गताः सर्वाः देवताः पुनः काशीं समागताः।

विश्वनाथः विशालाक्षी च इदानीं काशीनगरे वसतः। तादृशनगरे किञ्चित्कालपर्यन्तं वासं कर्तुम् इच्छन् वेदव्यासः स्वीयशिष्यगणैः सह काशीम् आगतवान्। तस्य महानुभावस्य शिष्येषु वैशम्पायनः, जैमिनिः, पैलः, सुमन्तः इत्यादयः अनेके महिमशालिनः आसन्।

ते सर्वे सूर्योदयकाले गङ्गायां स्नात्वा, अनुष्ठानादिकं समाप्य भिक्षाटनार्थं, एकैकः एकैकं मार्गम् अनुसृत्य गतवन्तः।

तस्मिन् समये विश्वेश्वरः विशालाक्षीं "व्यासस्य मनः कीदृशम् अस्ति इति पश्यामः। अतः सः तस्य शिष्याः च कुत्रापि भिक्षां यथा न प्राप्नुयुः तथाः करोतु" इति उक्तवान्।

तदा विशालाक्ष्याः प्रभावेण काशीनगरस्य गृहिणीनां भिक्षादानबुद्धिः एव कुण्ठिता अभवत्। व्यासः 'भिक्षां देहि' इति याचमानः गृहं गृहम् अटितवान्। एका गृहिणी "पाकः



न समाप्तः भोः'' इति, अन्या ''पाकसामग्री न आगता'' इति, अपरा 'अनन्तरम् आगच्छतु' इति, ''अग्रे गच्छतु'' इत्यादिरीत्या सर्वाः उक्तवत्यः।

व्यासस्य या गतिः, सा एव तस्य शिष्याणाम् अपि अभवत्। सायङ्काले ते सर्वे रिक्तहस्ताः एव मठं प्रत्यागतवन्तः।

''अहं तु कुत्रापि किञ्चिदपि न लब्धवान्। भवन्तः भिक्षां लब्धवन्तः वा?'' इति व्यासः शिष्यान् पृष्टवान्। 'किमपि न लब्धम्' इति उक्तवन्तः शिष्याः।

''अद्य प्रातः कस्य अदृष्टहीनस्य मुखं दृष्टम् इति न जाने!'' इति उक्तवान् व्यासः।

एवंरीत्या एव सप्तदिनानि यावत् प्राचलन्। यद्यपि बुभुक्षां सोढुं तेषाम् अभ्यासः आसीत्, किन्तु कियत्पर्यन्तम्? अष्टमे दिने प्रातः यथापूर्वं नित्यकर्माणि समाप्य, काश्यां स्थिताः सर्वाः देवताः मनसा नमस्कृत्य, व्यासः तस्य शिष्याः च भिक्षायाचनार्थं प्रस्थितवन्तः।

यथापूर्वं व्यासः कुत्रापि भिक्षां न लब्धवान्। तदा तस्य असहनीयः क्रोधावेशः उत्पन्नः। सः मार्गमध्ये भूमौ भिक्षापात्रं बलात् घट्टयन् काश्यां परम्परात्रयं यावत् विद्यायाः, धनस्य भक्त्याः च अभावः भवतु इति शापं दातुं मनसि निश्चित्य, कमण्डलुतः जलं हस्ते स्थापयितुं यदा उद्युक्तः तदा तस्य कम्पमानः हस्तः तथैव अचलः अभवत्।

अत्रान्तरे तस्मिन् मार्गे स्थितस्य कस्यचित् गृहस्य द्वारम् उद्घाटय, पञ्चाशद्वर्षीया काचन सर्वाभरणभूषिता स्त्री बहिः आगत्य व्यासं दृष्ट्वा ''भोः, ब्राह्मण! शान्तः भवतु! शापः मास्तु! अत्र आगच्छतु!'' इति शान्तस्वरेण आहूतवती।

व्यासः महता आनन्देन तां नमस्कृतवान्। तस्याः समीपं गतवान् च। तदा सा ''केवलं भिक्षा न लब्धा इति अल्पकारणेन काशीनगरं शपते वा? भवतः मनःशुद्धिं परीक्षितुं विश्वनाथः एवं कृतवान्। किं काश्यां भिक्षायाः अभावः भवेत् वा? मध्याह्ने अतिथिजनानाम् आगमनवेलां प्रतीक्षमाणा



अन्नपूर्णादेवी सुवर्णदर्वीं गृहीत्वा अमृतपायसं परिवेषयति इति भवान् न श्रुतवान् वा? केवलं सप्तदिनानाम् उपवासेन धीरत्वरहितः भूत्वा, शिवस्य द्वितीयपत्नीसदृशीं काशीं नाशयितुम् इच्छति खलु? 'बुभुक्षितः किं न करोति पापम्' इति वाक्यं प्रमाणीकृतं भवता! आगच्छतु, भिक्षां दास्यामि'' इति उक्तवती।

तस्याः वचनं श्रुत्वा व्यासः ''अम्ब, बहुकालानन्तरम् अत्यन्तमधुरं वचनं श्रुतम्! केवलं माम् आह्वयति? उत क्षुधापीडितान् मम शिष्यान् अपि आह्वयति वा? सर्वेषां प्राणाः समानाः खलु? भवती यत् ददाति, तदेव विभज्य वयं सर्वे स्वीकुर्मः'' इति उक्तवान्।

तत् वचनं श्रुत्वा सा स्मयमाना ''वत्स, भवन्तः गङ्गातीरे माध्याह्निकादिकं समाप्य, सर्वे अपि अत्र आगच्छन्तु। सर्वेभ्यः अपि भोजनं परिवेषयामि'' इति उक्तवती।

व्यासः ततः प्रतिनिवृत्य, स्वीयैः त्रिशतशिष्यैः सह गङ्गानदीं गत्वा, माध्याह्निकादिकं समाप्य, पुनः तत् गृहं प्रत्यागतवान्। सा स्त्री तान् सर्वान् भोजनशालां नीत्वा पीठेषु उपवेशितवती। सर्वेषां पुरतः बृहन्ति कदलीपत्राणि स्थापितवती। अनन्तरं सर्वेषाम् उपरि अक्षतारोपणं कृत्वा, नीराजनं दर्शयित्वा, भोजनपङ्क्तौ मध्ये स्थित्वा ''भोः भोः, भवन्तः सर्वे आपोशनं गृहीत्वा सावकाशं भोजनं कुर्वन्तु। भवतां भोजनेन काशीविश्वनाथः प्रीणातु!'' इति अञ्जलिबद्धा सा नमस्कृतवती।

व्यासः, तस्य शिष्याः च परस्परमुखानि दृष्टवन्तः। कदलीपत्रेषु कोऽपि पदार्थः न दृष्टः। पाकस्य गन्धलेशः अपि न आसीत्।

''एषा कुत्सिता वृद्धा मिथ्यानाटकं करोति। अद्यापि अस्माकम् उपवासः एव भवति! विलक्षणः एषः उपवासः!'' इति ते सर्वे मनसि चिन्तितवन्तः।

ते एवं चिन्तयन्तः एव आसन्। तदा अनेकाः स्त्रियः आगत्य सर्वेभ्यः आपोशनार्थं तीर्थं दातुं प्रवृत्ताः।

तदा वृद्धा स्त्री सर्वान् दृष्ट्वा 'भोः आर्याः,

महान् विलम्बः जातः। इदानीं भोजनं कुर्वन्तु" इति उक्तवती।

तेषाम् आपोशनतीर्थपानसमनन्तरम् एव सर्वेषां पत्रेषु सुगन्धभरिताः पञ्चभक्ष्यपायसादयः प्रत्यक्षीभूताः। एकैकस्य अपि अभिरुचिम् अनुसृत्य भिन्नभिन्नभक्ष्याणि तेषां पत्रेषु उपस्थितानि आसन्।

"सा वृद्धा साक्षात् अन्नपूर्णादेवी एव स्यात्" इति चिन्तयन्तः सर्वे आनन्देन भोजनं कृतवन्तः।

सर्वे भोजनं समाप्य हस्तप्रक्षालनं कृतवन्तः। अनन्तरं सा सर्वेषां विश्रान्त्यर्थम् उचितस्थानानि प्रदर्शितवती।

किञ्चित्कालानन्तरं पार्वतीसहितः विश्वनाथः व्यासस्य तस्य शिष्याणां च विश्रान्तिस्थानं प्रति समागतवान्। पार्वत्याः मुखं प्रशान्तम् आसीत्।

किन्तु शिवस्य मुखे क्रोधः ओतप्रोतः आसीत्। कीदृशः परिणामः भवेत्? शिवं पार्वतीं च दृष्ट्वा सर्वे झटिति युगपत् उत्थाय अञ्जलिबद्धाः भूत्वा प्रणामं कृतवन्तः।

पार्वतीसहितः शिवः एकस्यां वेदिकायाम् उपविश्य क्रोधेन व्यासस्य मुखं पश्यन् "रे दुष्टबुद्धे! महाभारतलेखकमूर्ख! अहङ्कारेण मम पत्नीसदृशीं काशीं शापभ्रष्टां कर्तुम् अपेक्षितवान् वा? काश्यां भवतः प्रवेशः एव अपराधाय! भवान् भवतः शिष्याः च इदानीम् एव इतः निर्गत्य अस्माकं राज्यस्य सीमातः बहिः गच्छन्तु!" इति गर्जितवान्।

तदा तेन सह स्थिता पार्वती व्यासं दृष्ट्वा "वत्स, व्यास! भवान् अन्यत्र कुत्रापि न गच्छतु। इतः साक्षात् दक्षारामं गत्वा, तत्र भीमेश्वरं पूजयतु। भवतः समस्तमङ्गलानि सिद्ध्यन्ति। शिवस्य वचनैः खेदः मास्तु" इति उक्तवती वात्सल्येन।

तस्याः वचनानुसारेण एव व्यासः स्वीयशिष्यैः सह भीमेश्वरस्य उपासनार्थं दक्षारामं गतवान्।





# नूतनः अनुभवः

कदाचित् स्वामी निर्गुणानन्दः स्वशिष्यैः सह शान्तपुरम् आगतवान्। तस्य दर्शनार्थं तद्ग्रामीणः पार्श्वग्रामीणाः च सहस्रशः आगतवन्तः। स्वामी तान् वैराग्यविचारान् उपदिष्टवान्। अनन्तरं प्रश्नोत्तरसन्दर्भे सर्वे स्वस्वजीवनस्य समस्यायाः परिहारं पृष्टवन्तः।

निर्गुणानन्दः अनासक्त्या शिरः चालयन्- "एते सर्वे क्षुल्लकाः प्रश्नाः। एतादृशलघुसमस्याभिः एव भवन्तः दिग्भ्रान्ताः। एवं चेत् महासमस्याः उपस्थिताः चेत् भवन्तः किं वा कुर्युः?" इति उपहसन् तेषां मुखबन्धनं कृतवान्।

'आत्मनः गभीराम् अपि समस्यां अल्पां वदन्तः स्वामिनः अस्मान् उपहसितवन्तः' इति सर्वे ग्रामीणाः खिन्नाः। तथापि ते श्रद्धया मौनम् उपविष्टवन्तः।

तदा ग्रामप्रमुखः शिवगणेशः उत्थाय उक्तवान्- "भवन्तः याः समस्याः पृष्टवन्तः ताः सर्वाः अल्पाः एव। आध्यात्मिकतया काऽपि समस्या अस्ति चेत् वदन्तु। स्वामिनः तस्य परिहारं सूचयिष्यन्ति" इति।

ग्रामाधिकारिणः विवरणं निर्गुणानन्दः मन्दहासपूर्वकं स्वागतीकृतवान्। किन्तु ग्रामीणानां पुरतः केवलं दैनन्दिनसमस्याः सन्ति। आध्यात्मिकचिन्तनं कस्यापि नास्ति।

स्वामी निर्गुणानन्दः पुनरपि दिनद्वयं यावत् ग्रामे स्थित्वा धार्मिकविचारान् उपदिष्टवान्। तृतीये दिने रात्रौ शिवगणेशः स्वगृहे स्वामिनः तच्छिष्याणां च भोजनं व्यवस्थापितवान्।

भोजनानन्तरं शिवगणेशः गुरुशिष्येभ्यः समीचीनां शयनव्यवस्थाम् उपकल्पितवान्। स्वामिनः कृते मशकहरीं व्यवस्थापितवान्।

प्रातःकाले शिवगणेशेन लक्षितं यत् निद्राभावतः निर्गुणानन्दस्य नेत्रद्वयं रक्तं, मुखं

च सर्वथा म्लानम्। सः भयेन भक्त्या च पृष्टवान्- "श्रीमन्! रात्रौ उपकल्पिता शयन-व्यवस्था सम्यक तु आसीत् किल?" इति।

"व्यवस्था समीचीना एव। किन्तु मशक-पीडातः क्षणकालं यावत् अपि निद्रा न प्राप्ता" इति उक्तवान् निर्गुणानन्दः। तदा शिवगणेशः विनयेन- "स्वामीन्! अस्मिन् काले मशकाः अधिकाः। तत्रापि एतत्प्रदेशे तेषां पीडा अत्यधिका। अतः एव मशकहरी व्यवस्थापिता आसीत्" इति उक्तवान्।

"किं तेन सिद्धम्? कथञ्चित् अन्तः प्रविष्टः कश्चन मशकः आरात्रि माम् अपीडयत्। निद्रा न आगता एव" इति उक्तवान् निर्गुणानन्दस्वामी।

शिवगणेशः सहजस्वरेण उक्तवान्- "औद्धत्यं चेत् क्षन्तव्यम्। महाज्ञानिनः भवन्तः एव, अल्पेन केनचित् मशकेन एवं पीडाम् अनुभूतवन्तः। एवं तर्हि ग्रामीणाः स्वजीवने आगताभिः समस्याभिः चिन्ताग्रस्ताः चेत् न तत्र विशेषः किल? तासां समस्यानाम् उपेक्षा अपि अनुचिता किल?" इति।

निर्गुणानन्दे विवेकः उदितः एव। "मानवानां दैनन्दिनकौटुम्बिकसमस्याः उपेक्षां न अर्हन्ति। धर्मोपदेशेन तासां परिहारः अपि अशक्यः एव। समस्यानुगुणं परिहारोपायः चिन्तनीयः" इति वस्तुस्थितिं ज्ञातवान्।

"सत्यम्। भवान् यत् उक्तवान् तत् सत्यम्" इति उक्त्वा सः मौनं स्थितवान्।

तद्दिने सायङ्काले निर्गुणानन्दः भक्तानां समावेशनं कारयित्वा तत्र सर्वेषां ग्रामीणानां समस्यानां परिहारमार्गं मृदुभिः वचनैः व्यक्तिशः सूचितवान्। अनन्तरदिने अन्यं ग्रामं गच्छन् शिवगणेशम् उक्तवान्- "लघुमशकतः मया विशेषपाठः पठितः। वस्तुतः मानवः यस्मिन् परिसरे निवसति तदनुगुणं समस्याः उद्भवन्ति। परिसरानुगुणं व्यक्त्यनुगुणं च तासाम् अल्पत्वं महत्त्वं वा अस्ति। एतदनुसारेण एव परिहारोपायः अपि चिन्तनीयः" इति।





# स्वयंकृतापराधः

कस्मिंश्चित् नगरे निर्वाकनामकः वैद्यः आसीत्। यद्यपि सः बहोः कालतः वैद्यवृत्तिं करोति तथापि तस्य सम्पादनं न अधिकम्।

पिता एव तं वैद्यवृत्तिं पाठितवान् आसीत्। पाठनसन्दर्भे पिता वदति स्म- "वैद्यः केवलं धनाकांक्षी न भवेत्। रोगिणं सम्यक् परिशील्य रोगस्य मूलकारणं ज्ञात्वा योग्यम् औषधं दातव्यम्। यथा यथा भवान् अधिकम् अनुभवं प्राप्नोति तथा तथा प्रसिद्धः अपि भविष्यति। इदानीं भवतः व्यवहारः तथा नास्ति। विशेषतः धनस्य आशा दृश्यते। रोगी यदा भवतः समीपम् आगच्छति तदा भवान् 'एषः कियत् दद्यात्?' इति चिन्तयति, न तु तस्य रोगनिवारणविषये। अतः एव भवान् प्रसिद्धिं प्राप्तुं न अर्हति। धनम् अपि सम्पादयितुं न शक्नोति" इति।

पितुः वचनानि निर्वाकाय न रोचन्ते। तानि श्रुत्वा सः खिद्यति कुप्यति च।

'वैद्यशास्त्रे पुत्रः मम अपेक्षया अधिकं जानाति' इति पिता जानाति। एतद्विषये तस्य अभिमानः अस्ति अपि। किन्तु खेदः तु एकः एव यत् पुत्रस्य परोपकारबुद्धिः नास्ति किल इति।

एवं स्थिते कदाचित् एकः भिक्षुकः इतस्ततः चलन् आगत्य निर्वाकस्य गृहस्य पुरतः शिरोभ्रमणेन पतितवान्। एतत् दृष्ट्वा निर्वाकस्य पिता धरणीशः क्रियमाणं कार्यं तत्रैव परित्यज्य धावन् आगतवान्। भिक्षुकम् उन्नीय गृहस्य अन्तः नीत्वा शायितवान् च।

धरणीशः भिक्षुकस्य परीक्षां कृतवान्। हृदयस्पन्दनं स्पष्टम् आसीत्। 'श्वासोच्छ्वासः निरन्तरतया आसीत्। 'प्राणापायः तु नास्ति' इति मनःसमाधानं प्राप्नुवन् धरणीशः भिक्षुकस्य मुखं जलेन सेचितवान्। प्रथमोप-



चारं कृतवान् च ।

एतेन भिक्षुकः क्रमशः सचेतनः अभवत्। सः उत्थाय धरणीशं नमस्कृत्य ततः गन्तुम् उद्युक्तः। तदा धरणीशः तस्य गमनं निवारयन् करुणया उक्तवान्- "भोः! अद्य अत्रैव उदरपूर्णं भोजनं कृत्वा गच्छतु" इति।

"मास्तु श्रीमन्! इदानीम् एव दयामय्या कयाचित् मात्रा दत्तं भोजनं मम समीपे अस्ति" इति विनयेन उक्तवान् भिक्षुकः।

धरणीशः आश्चर्येण पृष्टवान्- "एवं तर्हि भवान् शिरोभ्रमणेन यत् पतितवान् तत्र बुभुक्षा कारणं न वा?" इति।

"न श्रीमन्! एषः कश्चन रोगः। प्रतिदिनं चतुर्वारं पञ्चवारं वा एवं मूर्च्छां प्राप्नोमि। अतः भिक्षार्थम् अटने अपि मम कष्टम् एव। तथापि मूर्च्छया पतितं मां दृष्ट्वा कदाचित् केचन धनम् अपि क्षिप्त्वा गच्छन्ति। अतः मम लाभः अपि अस्ति" इति उक्तवान् भिक्षुकः।

तत् श्रुत्वा धरणीशः- "भोः! धनस्य आशया रोगस्य पोषणं न करणीयम्। रोगनिवारणार्थम् उपायः प्रथमं चिन्तनीयः। रोगनिवारणं यदि इच्छति तर्हि वदतु। मम पुत्रद्वारा चिकित्सां कारयिष्यामि" इति उक्तवान्।

भिक्षुकः निराशया उक्तवान्- "मम रोगं दूरीकर्तुं केनापि वैद्येन न शक्यते श्रीमन्! प्रसिद्धवैद्याः अपि असमर्थाः सञ्जाताः। विचित्रः रोगः एषः" इति।

"मम पुत्रः सामान्यः वैद्यः न। वैद्यकीये तस्य विशेषपरिणतिः अस्ति। भवान् इच्छति चेत् वदतु। इदानीम् एव औषधं दापयामि" इति उक्तवान् धरणीशः।

भिक्षुकः मन्दहासं प्रकटयन् उक्तवान्- "श्रीमन्! रोगनिवारणे मम इच्छा तु अस्ति एव। यतः मूर्च्छया ग्रामे जनानां मध्ये पतामि चेत् कोऽपि अपायः नास्ति। किन्तु निर्जने प्रदेशे कुत्रापि पतामि चेत्! पूर्वं द्वित्रवारं यदा एवं पतितवान् तदा दुष्टाः केचन मम भिक्षाधनम् अपि अपहृतवन्तः। किन्तु अहं

निर्धनः भिक्षुकः। भवतः पुत्रः धनं विना मम चिकित्सां कुर्यात् वा ?'' इति।

''तद्विषये भवतः चिन्ता मास्तु'' इति वदन् धरणीशः गृहस्य अन्तः गतवान्। भिक्षुकस्य परिस्थितिं पुत्राय निवेद्य उक्तवान् च- ''पुत्र! अनपेक्षितं कार्यम् इति न चिन्तयतु। 'मनुष्येषु मानवत्वं कियत् अस्ति ?' इति परीक्षितुं परमेश्वरः एवम् आगतः स्यात् अपि। भिक्षुकः निर्धनः अनाथः च इति उपेक्षां न प्रदर्शयतु। श्रद्धया रोगिणं परीक्ष्य योग्यम् औषधं ददातु। एतेन भवतः हितम् एव सिध्यति। कदाचित् भाग्यम् एव परिवृत्तं भवेत् अपि। मम वचनेषु विश्वसितु'' इति।



पितुः वचनं निराकर्तुम् अशक्तः निर्वाकः अनिच्छया एव भिक्षुकं परीक्षितवान्। किमपि औषधं सज्जीकृत्य भिक्षुकाय दत्तवान्।

भिक्षुकः निर्वाकं धरणीशं च नमस्कृत्य ततः गतवान्।

धरणीशः पुत्रम् उक्तवान्- ''पुत्र! भवतः कार्येण अहम् अतीव सन्तुष्टः। देवाः भवन्तं निश्चयेन आशीर्वदिष्यन्ति। सद्यः एव भवान् सौभाग्यं प्राप्स्यति'' इति।

तदा निर्वाकः असमाधानेन ''तथा भवति चेत् मम सन्तोषः एव। किन्तु भिक्षुकस्य रोगस्य निवारणं भवेत् इति मम एव विश्वासः नास्ति। यथा अह जानामि तस्य रोगस्य काऽपि चिकित्सा नास्ति'' इति उक्तवान्।

''तर्हि भवान् तस्मै किम् औषधं दत्तवान् ?'' इति आश्चर्येण पृष्टवान् धरणीशः।

''भवतः मनःसमाधानार्थं निरपायकरीः गुलिकाः दत्त्वा तं प्रेषितवान्। परिणामः तु दैवाधीनः'' इति उक्तवान् निर्वाकः।

भिक्षुकस्य भाग्यम् अनुकूलकरम् इत्येव वक्तव्यम्। निर्वाकेन दत्तेन औषधेन भिक्षुकस्य उपरि परिणामः जातः। रोगः क्रमशः न्यूनः अभवत्।

सप्ताहानन्तरं भिक्षुकः निर्वाकस्य समीपम् आगत्य श्रद्धया नमस्कृत्य- ''श्रीमन्! भवतः हस्तगुणः अपूर्वः। पूर्वम् अहम् अपि भिक्षुकः न आसम्। श्रमेण कार्यं कुर्वन् जीवननिर्वहणं



करोमि स्म। किन्तु यदा एषः रोगः आगतः तदारभ्य अहम् अप्रयोजकः जातः। अनन्य-गत्या भिक्षावृत्तिम् आश्रितवान्। इतःपरं पूर्वे इव श्रमेण कार्यं कुर्वन् जीविष्यामि'' इति कृतज्ञतापूर्वकम् उक्तवान्।

निर्वाकः तिरस्कारेण इव- ''मम वैद्यकीय-ज्ञानं भवादृशानां चिकित्सार्थम् एव अस्ति। अतः एव मम सम्पादने विशेषप्रगतिः न दृश्यते। किं करोमि? मम अदृष्टं तथा अस्ति'' इति उक्तवान्।

''श्रीमन्! भवतः चिकित्सानुगुणं धनं दातुम् असमर्थः स्याम्। किन्तु धनसम्पादन-मार्गं तु निश्चयेन सूचयितुं शक्नोमि। तद्-द्वारा भवतः ऋणात् किञ्चिदिव वा मुक्तः भवितुम् इच्छामि'' इति उक्तवान् भिक्षुकः।

एतेन वचनेन कुपितः निर्वाकः- ''भिक्षुक-मुखात् मया सम्पादनमार्गः श्रोतव्यः नास्ति'' इति उक्तवान्।

तदा तत्र आगतः धरणीशः पुत्रस्य वचनं श्रुत्वा- ''भोः पुत्र! कः कथम् उपकारकः भवति इति कः वा जानाति? तृणम् अपि उपकाराय भवेत्। तस्य वचनं शृणोतु प्रथमम्'' इति सूचितवान्।

तदा भिक्षुकः निर्वाकम् उक्तवान्- ''इतः विंशतियोजनदूरे शरन्नगरम् अस्ति। तत्र श्वेतगुप्तः नाम वणिक् निवसति। सः तु कोटयधीशः। सः अपि मूर्च्छारोगेण पीडितः अस्ति। बहोः कालतः एषः रोगः तं पीड-यति। परिणताः अनेके वैद्याः तत्र आगताः। सर्वे आत्मनः असहायकतां प्रकटय गतवन्तः। अन्ते श्वेतगुप्तेन उद्घोषणं कृतं यत्- 'यः मम रोगस्य चिकित्सां यशस्वितया करोति तस्मै लक्षसुवर्णनाणकानि दास्यामि' इति। अहं विश्वासपूर्वकं वदामि- भवान् तं धनराशिं प्राप्तुं शक्नोति। भिक्षुकस्य वचनम् इति उपेक्षां न प्रदर्शयतु'' इति। अनन्तरं निर्वाकं धरणीशं च नमस्कृत्य ततः निर्गतवान्।

एतत् वचनं श्रुत्वा निर्वाकः क्षणद्वयं यावत् मौनं स्थितवान्। तस्य मुखं म्लानम् अभवत्। एतत् किमपि अपश्यन् धरणीशः उत्साहेन

उक्तवान्- "पश्यतु, मया उक्तम् आसीत्- धनिक-दरिद्रभेदं विना समभावनया चिकित्सा करणीया इति। भवान् भिक्षुकं चिकित्सया उपकृतवान्। देवाः अनुग्रहं प्रदर्शितवन्तः। भवान् भाग्यशाली सञ्जातः। इदानीं सौभाग्य-लक्ष्मीः गृहस्य पुरतः उपस्थिता अस्ति" इति।

तदा निर्वाकः खेदेन उक्तवान् "तात! सौभाग्यलक्ष्मीः उपस्थिता अस्ति। किन्तु अहं तां स्वागतीकर्तुं न शक्नोमि। अविवेकिना मया अकार्यं कृतम्। श्रद्धया अहं भिक्षुकस्य चिकित्सां न कृतवान्। भवतः वचनं निरा-कर्तुम् अशक्तः अहं कोपेन कस्यापि सस्यस्य मूलं निष्कास्य तस्मै दत्तवान्....।"

"तेन किं नष्टम्? तस्यैव मूलस्य उपयोगेन श्वेतगुप्तस्य चिकित्सां करोतु। यत् मूलं भिक्षुकस्य रोगं निवारयति तत् श्वेतगुप्तस्य रोगम् अपि निवारयेत् एव" इति उक्तवान् धरणीशः।

निर्वाकः क्षणकालं मौनं स्थित्वा उक्तवान्- "मम क्लेशः सः न। भिक्षुकाय कस्य सस्यस्य मूलं दत्तम् इति अहं न स्मरामि। कोपावेशे किमपि मूलं निष्कास्य पेषयित्वा गुलिकां निर्माय तस्मै दत्तवान्। अस्माकं गृहं परितः द्विसहस्राधिकानि सस्यानि सन्ति। एतेषु मया कस्य वा मूलं स्वीकृतम् इति तु विस्मृतम् एव। इदानीं तादृशीं गुलिकां निर्मातुं सर्वथा न शक्नोमि" इति।

"हन्त! स्वयंकृतापराधः एषः! पश्चात्तापं विना अस्य अन्यः परिहारः नास्ति एव। ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते। अनुभवतु इदानीम्" इति उक्त्वा धरणीशः ततः निर्गतवान्।

एतया घटनया निर्वाके विवेकः उत्पन्नः। वैद्यः धनसम्पादनं केवलं न चिन्तयेत् इति सः ज्ञातवान्। अतः पितुः मार्गदर्शनानुसारं नूतनं जीवनम् आरभ्य 'उत्तमः वैद्यः' इति कीर्तिं सम्पादितवान्। तेन यथेष्टं धनम् अपि सम्पादितवान्।





# सौभाग्यम्

पूर्वं बैरूतनगरे सुलेमान् नामकः कश्चन निर्धनः वृद्धः आसीत्। तस्य पुत्रीद्वयम्। पत्नी पुत्रीद्वयं च कार्पासतः तन्तवः सज्जी-कुर्वन्ति। ताभिः निर्मितान् तन्तून् सुलेमान् विपणिं नयति। तान् विक्रीय सम्पादितेन धनेन जीवनं यापयति च। किन्तु सः स्व-जीवने सञ्चयं किमपि कर्तुं न शक्तवान्। अतः सः प्रतिदिनं पश्चात्तापम् अनुभवति।

एकदा ज्वरपीडितः सुलेमान् दिनद्वयं यावत् कुत्रापि गन्तुं न शक्तवान्। मज्जीकृताः तन्तवः गृहे एव स्थिताः। तदा अनिवार्यतया सुलेमानस्य ज्येष्ठा पुत्री तन्तून् स्वीकृत्य विपणिं गतवती। विपण्यां योग्येन मूल्येन तन्तून् विक्रीय प्राप्तेन धनेन तिस्रः रोटिकाः क्रीतवती। गृहं प्रति प्रस्थितवती च।

विपणितः तस्याः गृहं गन्तुं कश्चन समीपतरः मार्गः अपि अस्ति। तेन मार्गेण आगच्छन्ती सा पुत्री समीपे स्थितात् कुटीरात् आक्रन्दनध्वनिं श्रुतवती। सा कुटीरस्य अन्तः दृष्टिं प्रसारितवती। कुटीरे काचित् वृद्धा शयनं कृतवती आसीत्। तस्याः पार्श्वे शिशुद्वयं सुप्तम् आसीत्। उत्थातुम् अशक्ता सा वृद्धा वेदनया दीनतया रोदनं कुर्वती आसीत्।

सुलेमानस्य पुत्री अन्तः गत्वा- "किं भोः भवत्याः कष्टम्? किमर्थम् एवं वेदनया रोदनं करोति?" इति पृष्टवती।

"बुभुक्षा भोः! महती बुभुक्षा! दिनत्रयतः आहारः नास्ति। बुभुक्षया म्रियमाणा अस्मि" इति उक्तवती वृद्धा कम्पमानेन स्वरेण।

"मम समीपे रोटिकात्रयम् अस्ति। तत् खादतु। तेन किञ्चिदिव शक्तिं प्राप्नोति। किन्तु श्वः किं वा करिष्यति?" इति पृष्टवती सुलेमानस्य पुत्री।

"यदि रोटिकात्रयं ददाति तर्हि किञ्चिदिव-

"अरेबिया कथा"

उज्जीविता भवेयम्। तथा चेत् अहं नगरं गन्तुं शक्ष्यामि। तत्र धनिकाः मम बान्धवाः सन्ति'' इति उक्तवती सा वृद्धा।

सुलेमानस्य पुत्री स्वसमीपे स्थितं रोटिकात्रयं दत्तवती। सा वृद्धा ताः स्वीकृत्य पुत्र्योः कृते दत्त्वा स्वयं खादितवती।

अनन्तरं सा वृद्धा सुलेमानस्य पुत्रीम् उक्तवती- ''भवत्याः दयागुणः असदृशः। प्रत्युपकाररूपेण अहं किं वा करोमि? मम समीपे केवलम् एका गलन्तिका अस्ति। किन्तु सा रिक्ता। ताम् एव दास्यामि, स्वीकरोतु'' इति। गलन्तिकां दत्तवती च।



सुलेमानस्य पुत्री गलन्तिकां पश्यन्ती उक्तवती- ''मातः! एषा गलन्तिका रिक्ता वा भवतु पूर्णा वा भवतु। अहं तां न स्वीकरोमि'' इति।

''रिक्ता गलन्तिका इति मा चिन्तयतु। मम वचनं श्रृणोतु- एतस्य स्वीकरणेन भवतां हितं सिध्यति। भवत्या एषा गलन्तिका अवश्यं नेतव्या एव'' इति सा वृद्धा आग्रहपूर्वकम् उक्तवती।

तस्याः वचनं निराकर्तुम् अशक्ता सुलेमानस्य पुत्री तां गलन्तिकां स्वीकृत्य स्वगृहं गतवती। प्रवृत्तं सर्वं मातरं निवेदितवती च।

पुत्र्या रोटिकादानं यत् कृतं तेन गृहसदस्यैः सर्वैः उपवासः करणीयः आपतितः। तथापि ते न खिन्नाः। ''अन्यस्य बुभुक्षायाः निवारणार्थं रोटिकानाम् उपयोगः कृतः किल? महान् सन्तोषः'' उक्तवन्तः ते।

सुलेमानः अपि सन्तोषेण उक्तवान्- ''उचितं कार्यं कृतवती भवती। एतस्याः गलन्तिकायाः विक्रयणेन किञ्चित् आहारः लभ्येत'' इति वदन् द्वितीयां पुत्रीम् आहूय सूचितवान्- ''विपणिं गत्वा एतां विक्रीय आगच्छतु'' इति।

द्वितीया पुत्री गलन्तिकां स्वीकृत्य विपणिं गतवती। विक्रयणार्थं मार्गस्य पार्श्वे उपविष्टवती च। तेन मार्गेण बहवः गतवन्तः। किन्तु कोऽपि गलन्तिकां न दृष्टवान् अपि।

सायङ्काले एकः धीवारः आगत्य एतां पृष्ट-

वान्- "पुत्रि ! मम समीपे एकः एव मीनः अवशिष्टः। अल्पमूल्येन दास्यामि। स्वीकरोति वा ?" इति।

"मीनं स्वीकर्तुं मम समीपे धनम् एव नास्ति। यदि एतां गलन्तिकां स्वीकृत्य मीनं दातुं शक्नोति तर्हि ददातु। स्वीकरोमि" इति उक्तवती सा द्वितीया पुत्री।

'यावत् लब्धं तावत् एव पर्याप्तम्' इति चिन्तयन् सः धीवरः मीनं दत्त्वा गलन्तिकां स्वीकृत्य गतवान्।

द्वितीयपुत्री मीनम् आनीय स्वमातुः हस्ते दत्तवती। माता यदा पाकार्थं मीनस्य छेदनं कृतवती तदा तया मीनस्य उदरे प्रकाशमानं मौक्तिकं दृष्टम्। एतत् दृष्ट्वा सर्वे आश्चर्यचकिताः सन्तुष्टाः च।

अनन्तरदिने सुलेमानः प्रातः उत्थाय उपाहारादिकं समाप्य स्वबाल्यस्नेहितस्य सुवर्णवणिजः समीपं गत्वा मौक्तिकं प्रदर्शितवान्।

सः वणिक् मौक्तिकं परीक्ष्य- "एतादृशम् अत्युत्कृष्टं मौक्तिकम् अहम् अद्यावधि न दृष्टवान्। निपुणः वज्रपरीक्षकः कश्चन मम स्नेहितः अस्ति। तस्य समीपं गच्छावः" इति उक्त्वा सुलेमानं वज्रपरीक्षकस्य समीपं नीतवान्। सः वज्रपरीक्षकः वज्रं परीक्ष्य, तत् स्वयं क्रीतवान्। धनराशिम् एव सुलेमानाय दत्तवान्।

एवम् अकस्मात् प्राप्तेन धनेन सुलेमानस्य सर्वाणि कष्टानि समाप्तानि अभवन्। सः उत्तमौ वरौ अन्विष्य पुत्र्योः विवाहं सवैभवं निर्वर्तितवान्।

एकदा सुलेमानः पुत्री-जामातृभिः सह भूरिभोजनं कुर्वन् गद्गदस्वरेण उक्तवान्- "गलन्तिकायाः स्वरूपं मया अद्य ज्ञातम्। वस्तुतः तया वृद्धया रिक्ता गलन्तिका न दत्ता। तस्याः अन्तः वृद्धायाः कृतज्ञतापूर्णः सद्भावः पूरितः आसीत्। अतः एव अस्माकं सर्वाणि कष्टानि दूरङ्गतानि। इदानीं वयं सुखमयानि दिनानि यापयन्तः स्मः" इति।





# वीराधिवीरः

पूर्वं कलिङ्गदेशस्य वङ्गदेशस्य च मध्ये एकं विशालं दुर्गम् आसीत्। दुर्गस्य भित्तयः उन्नताः स्थूलाः च। किन्तु अन्तःसामर्थ्यं तावत् नास्ति। समर्था सेना यदि आक्रमणं कुर्यात् तर्हि तत् दुर्गं पतेत् एव।

एतत् दुर्गं जितवर्मा नाम कश्चित् विचित्र-स्वभावयुतः पालयन् आसीत्। तदीयपूर्वजाः शौर्येण राज्यं पालयन्तः समर्थाः इति कीर्तिं सम्पादितवन्तः आसन्। अतः जितवर्मा अपि आत्मानं महापुरुषं मन्यमानः गर्वेण जीवति स्म।

"अस्माकं दुर्गम् अतीव प्रबलम्। अतः एव अस्माकं राज्यस्य दिशि कोऽपि दृष्टिम् अपि न प्रसारयति। आक्रमणं कृतं चेदपि ते मम पराक्रमस्य तीव्रतां सोढुं न शक्नुवन्ति" इति जितवर्मा विकत्थनं करोति स्म। "आं, भवदुक्तं सत्यम्" इति वन्दिनः शिरः चालयन्ति स्म।

सामान्याः जनाः अपि महाराजं प्रत्यक्षतः 'भवान् इन्द्रः, भवान् चन्द्रः' इति वदन्तः, महाराजस्य असन्निधाने तु उपहसन्ति स्म।

जितवर्मा आत्मनः प्रतापातिशयं निरूपयितुम् इच्छन् कैश्चित् वीरैः सह कस्यचित् भूस्वामिनः क्षेत्रस्य गृहस्य वा उपरि आक्रमणं करोति। कानिचन फलानि, पोष्यप्राणिनः कुक्कुटादयः चोरिताः चेत् भूस्वामिनः उपेक्षां प्रदर्शयन्तः मौनं तिष्ठन्ति। ततोऽपि अधिकं अपहृतं चेत सेवकद्वारा जितवर्माणं तत्सहचरान् च ताडयन्ति। एवं सेवकैः ताडितः जितवर्मा क्रोधेन इव वदति- "भीरवः! यदि तावत् सामर्थ्यं स्यात् तर्हि सम्मुखम् आगत्य युद्धम् अकरिष्यन्। सामान्यान् सेवकान् युद्धार्थं प्रेषयन्ति। अल्पैः सह युद्धं कर्तुम् अहं कथं शक्नुयाम्! अहं खलु महाराजः!" इति।

'जितवर्मणः पौरुषं कीदृशम्' इति तस्य

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता"



पत्नी सम्यक् जानाति। सा आक्रमणतः प्रत्यागतस्य पत्युः पृष्ठभागे विद्यमानानि व्रणानि औषधेन लिम्पन्ती कृतकम् अनुकम्पं प्रदर्शयन्ती वदति- "कीदृशाः नीचाः एते! केवलं पृष्ठतः स्थित्वा बाणादिभिः ताडयन्ति। यदि धैर्यं स्यात् तर्हि पुरतः आगत्य आक्रमणीयं किल? पृष्ठतः ताडयन्तः एते रणभीरवः एव" इति।

"मम सम्मुखे आगन्तुं तेषां धैर्यं भवेत् किल?" इति अभिमानेन वदति जितवर्मा।

एकदा प्रातःकाले दुर्गरक्षकः रक्षकभटः त्वरया वेगेन आगत्य जितवर्माणम् उक्तवान्- "महाप्रभो! सहस्रशः सैनिकाः अस्माकं दुर्गम् उद्दिश्य आगच्छन्तः सन्ति। प्रत्याक्रमणार्थं सिद्धता करणीया" इति।

जितवर्मा कोपेन हूँकारं कुर्वन् दुर्गस्य भित्तिम् आरुह्य परितः दृष्टिं प्रसारितवान्। कलिङ्गदेशस्य सेना आक्रमणार्थम् आगता अस्ति! गजाः अश्वाः रथाः च यथेष्टम् आसन्। पदातीनां सङ्ख्या अपि न अल्पा। आहत्य सामान्यतः षष्टिसहस्राधिकाः आसन्।

जितवर्मा स्वसेवकान् उच्चैः आहूय- "भोः पश्यन्तु....शृण्वन्तु....। अद्य सुदिनम्। अल्पाः कलिङ्गस्य सैनिकाः दुर्गस्य उपरि आक्रमणं कृतवन्तः सन्ति। भवन्तः धनूंषि बाणान्, शूलायुधान् च दुर्गभित्तेः उपरि स्थापयन्तु। अहम् एकः एव समग्रां सेनां नाशयिष्यामि। विजयलक्ष्मीं वरिष्यामि। कलिङ्गस्य शासकं मम सामन्तं करिष्यामि। कलिङ्गराजस्य अन्तिमकालः सन्निहितः इति भाति। अल्पस्य तस्य कियत् धैर्यम्!" इति अट्टहासपूर्वकम् उक्तवान्।

कलिङ्गसेनया 'जितवर्मा युद्धार्थम् आगत अस्ति' इति ज्ञातम्। सर्वे सैनिकाः सिद्धाः सन्तः दुर्गं परितः स्थितवन्तः। सेनाधिपतिः अश्वम् आरुह्य दुर्गस्य अग्रे आगत्य भित्तेः उपरि स्थितं जितवर्माणम् उच्चैः उक्तवान्- "अस्य दुर्गस्य रक्षकः कः?" इति।

"किमिति पृच्छन्ति? अहम् अस्मि जितवर्मा" इति सगर्वम् उक्तवान् जितवर्मा।



"एवं तर्हि विना विरोधं दुर्गस्य द्वारम् उद्घाटयन्तु। दुर्गाधिकारम् अस्मद्वशे यच्छन्तु। अन्यथा दुर्गं भवतः च नाशयिष्यामः। कलिङ्ग-देशस्य राज्ञः आज्ञानुसारं वयं वङ्गदेशं जेतुं प्रस्थिताः। दिग्विजयः अस्माकं लक्ष्यम्" इति उक्तवान् कलिङ्गसेनापतिः।

"अये नीच! कियत् औद्धत्यं भवतः? भवदीयां सेनां धूलिसात्करिष्यामि। अत्रैव भवतः दिग्विजयस्य परिसमाप्तिः। दुर्गाधिपस्य जितवर्मणः मम विषये किं चिन्तयन्ति भवन्तः?" इति गर्जनं कुर्वन् जितवर्मा सेना-धिपतिम् उद्दिश्य एकं बाणं प्रयुक्तवान्। सः बाणः कुत्रापि अन्यत्र गतः।

सेनापतेः आज्ञानुसारं केचन सैनिकाः जितवर्मणः सैनिकान् उद्दिश्य बाणान् प्रयुक्त-वन्तः। जितवर्मणः सैनिकाः अपि प्रत्याक्रमणं कृतवन्तः। किन्तु एवं परस्परबाणप्रयोगेन उभयपक्षे अपि काऽपि हानिः न जाता। कोऽपि न व्रणितः अपि।

एवम् एकघण्टां यावत् युद्धं प्रवृत्तम्। युद्धे कलिङ्गस्य सेना मन्दं पृष्ठतः गतवती।

"भीरवः! पृष्ठतः धावन्ति। मम प्रतापतः भीताः" इति जितवर्मा स्वभटान् सगर्वम् उक्तवान्।

वस्तुतः कलिङ्गसेना पृष्ठतः बहुदूरं न गता। किञ्चिद्दूरं गत्वा सैनिकाः सेनाशिबिरं स्थापितवन्तः। अनन्तरदिनतः प्रतिदिनं प्रातः सायं च अर्धघण्टां यावत् सैनिकाः आगत्य दुर्गस्य उपरि बाणप्रयोगं कृतवन्तः। पुनः मौनं प्रतिगतवन्तः च।

एवम् एव दश दिनानि अतीतानि। एकादशे दिने कलिङ्गसेनापतिः अश्वम् आरुह्य दुर्गस्य समीपम् आगत्य- "भोः जितवर्मन्! वयं युद्धे पराजिताः इव। सन्धिप्रस्तावार्थम् उत्सुकाः च। कृपया दुर्ग-द्वारम् उद्घाटयतु" इति उच्चैः उक्तवान्।

"इदानीं विवेकः उदितः। पूर्वम् एव सन्धिप्रस्तावः यदि कृतः स्यात् तर्हि वृथा श्रमः अनावश्यकः अभविष्यत्" इति वदन् जित-वर्मा सैनिकान् द्वारम् उद्घाटयितुम् आदिष्ट-

वान्। कलिङ्गसेनापतिं स्वागतीकृतवान् च।

"इतःपरं कलिङ्गराजः अस्माकं माण्डलिकः भविष्यति खलु?" इति पृष्टवान् जितवर्मा।

"तत् सद्यःकाले न शक्यं स्यात्। सद्यः तु भवान् 'मया कलिङ्गसेनायाः अर्धभागः युद्धे नाशितः। अवशिष्टः अर्धभागः कारागारे स्थापितः च' इति पत्रम् एकं लिखित्वा ददातु" इति उक्तवान् कलिङ्गसेनापतिः।

जितवर्मा तथैव पत्रं लिखित्वा दत्तवान्। तत् पत्रं स्वीकृत्य कलिङ्गसेनापतिः कलिङ्गराज्यम् उद्दिश्य गतवान्।

वस्तुस्थितिः एवम् आसीत् यत् कलिङ्गराज्यं स्ववशे स्थापयितुम् इच्छन् सेनापतिः एकं कुतन्त्रम् आश्रितवान् आसीत्। 'वङ्गराज्यं जित्वा आगच्छामि' इति उक्त्वा सः सेनापतिः कलिङ्गराज्यतः निर्गतः। सीमाप्रान्ते स्थितस्य जितवर्मणः दुर्गस्य उपरि आक्रमणं कृत्वा युद्धम् अभिनीतवान्। अन्ते स्वसेनाम् वङ्गराजस्य वशे अर्पयित्वा अल्पेन सैन्येन सह कलिङ्गराज्यं प्रत्यागतवान्। 'जितवर्मणा समग्रा सेना नाशिता' इति वदन् जितवर्मणः पत्रं कलिङ्गराजाय प्रदर्शितवान् च। अनन्तरम् अल्पे एव काले वङ्गसेनया कलिङ्गस्य उपरि आक्रमणं कृतम्। कलिङ्गसेना पराजिता। वङ्गस्य माण्डलिकत्वेन सेनापतिः एव राज्यस्य शासकः अभवत्।

जितवर्मा अन्ये जनाः वा सेनापतेः एतत् तन्त्रं न जानन्ति। जितवर्मा सगर्वं वदति— 'कलिङ्गसेनायाः अर्धभागः मया एव नाशितः' इति। तत्प्रान्ते स्थिताः जनाः वदन्ति स्म— 'जितवर्मणा यत् उच्यते तत् सत्यं स्यात्। यतः महत्या कलिङ्गसेनया अपि एतत् दुर्गं न वशीकृतम्' इति।

एतत् युद्धं प्रत्यक्षतः कोऽपि न दृष्टवान्। अतः 'वीराधिवीरः' इति ख्यातः जितवर्मा विनायासं सुखं जीवितवान्।



# मरुभूमिवासिनः प्राणिनः

यत्र रूक्षजातीयानि सस्यानि अपि कष्टेन वर्धन्ते तादृश्यां निर्जलायां मरुभूमौ अपि केचन प्राणिनः निवसन्ति इति तु आश्चर्यकरम् एव। किन्तु एतत् सत्यम्। मरुभूमौ सूर्यतापस्य पीडा असह्या। सर्वदा जलाभावः। शत्रुप्राणितः आत्मनः रक्षणार्थं रहस्यं स्थलं किमपि नास्ति। तथापि केचन प्राणिनः एतादृशं प्रकृतिविरोधं सोढुं समर्थाः सन्तः एव उत्पद्यन्ते।

गृहगोधिकासदृशाः प्राणिनः ईशान्य-आफ्रिका भागे परिदृश्यन्ते, येषां पुच्छं गोलाकारकं कण्टकाकीर्णं च भवति। प्रबलैः नखैः एते मीटर्‌द्वयगभीरं बिलं निर्मान्ति। शैत्यकाले रात्रौ अत्युग्रशैत्यतः आत्मानं रक्षितुम् एते एतेषु बिलेषु निवसन्ति। कण्टकमयं पुच्छं आपत्काले आयुधत्वेन परिणमन्ति। सर्पाः आक्रमणं कुर्वन्ति चेत् एते पुच्छं बिलस्य द्वारे संस्थाप्य आत्मनः सुरक्षां सम्पादयन्ति।

मरुभूमौ वसतः अन्यविधजन्तोः नाम कांगरूमूषकः इति। रात्रौ सञ्चरणशीलाः एते मूषकाः दिने बिलेषु सुप्ताः भवन्ति। किसलयविशेषान्, शुष्काणि बीजानि, कन्दमूलानि च खादन्तः एते जलं विना अपि जीवन्ति। मरुभूमिवासिनाम् इतरप्राणिनाम् इव एतेषाम् अपि श्रवणशक्तिः अतीव तीक्ष्णा। अतः उलूकसर्पादीनाम् आक्रमणतः पूर्वं दूरतः एव शब्दं श्रुत्वा सुरक्षिते स्थले निलीनाः भवन्ति।

सहरा मरुभूमौ दृश्यमानाः जर्बोवाजातीयाः मूषकाः अपि सामान्यतः कांगरू मूषकाः इव एव भवन्ति। किन्तु एतेषां पुच्छस्य दैर्घ्यं किञ्चिदिव अधिकम्। वेगेन उत्प्लवनं कुर्वन्तः गच्छन्ति इत्यतः कांगरूमूषकाणाम् अपेक्षया एतेषां वेगः अधिकः।





# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | | | |
|---|---|---|---|
| अधमर्णः - | Debtor | पेषणम् - | Grinding |
| अन्तरङ्गः - | Cellar | भूरिभोजनम् - | Festive food |
| अन्यमनस्कः - | Absentminded | मशकहरी - | Mosquito-net |
| अयःशलाका - | Iron rod | मस्तिष्कम् - | Brain |
| अहितुण्डिकः - | Snake-charmer | मूलम् - | Herb |
| आधारभूमिः - | Foundation | लवित्रम् - | Sickle |
| कार्पासः - | Cotton | बन्दी - | Adulator |
| कुसीदव्यवहारः - | Money lending | वल्न् - | Walk unsteadily |
| केदारः - | Cornfield | विकत्थनम् - | Boasting |
| गलन्तिका - | Water-jug | व्रणितः - | Wounded |
| गृध्रः - | Eagle | व्यूहः - | A military array |
| चक्रवृद्धिः - | Compound interest | शरवेगः - | The speed of an arrow |
| चञ्चूः - | Beak | शलाका - | A small stick |
| तन्तुः - | Yarn | शिबिरम् - | Camp |
| दर्वी - | Ladle | सङ्कीर्णः - | Narrow |
| धीवरः - | Fisherman | सञ्चयः - | Saving |
| पाथेयः - | Packed food | सोपानम् - | Flight of steps |
| पारदः - | Mercury | हृदयस्पन्दनम् - | Heart-beat |

## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां जुलै-८६ मासे प्रकटयिष्यामः।





❀ उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/– रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२, 'अक्षरम्' रङ्गरावमार्ग', शङ्करपुरम् बेङ्गलूरु–५६०००४**

---

**'मार्च' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

**प्रथमचित्रम्– स्वातन्त्र्यस्य अनुभवः।**
**द्वितीयचित्रम्– पारतन्त्र्येण परिभवः।**

**प्रेषकः–** श्री रङ्गस्वामी, ४७, मरियप्पनगरम्, अण्णामलैनगरम्–६०८००२

---

# भवन्तः जानन्ति वा? (उत्तराणि)

१. ७०–८० वारान्। २. १९६७ तमे संवत्सरे। ३. सामान्यतः १४००क्यूबिक् सेण्टीमीटर्। ४. १२० दिनानि। ५. पेन्सिलिन् अन्विष्टवान् इत्यतः।

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# घर्मो घर्मः

| | |
|---|---|
| I - हन्त ! घर्मो घर्मः ! | Oh! It is so hot here! |
| II - किं भोः एवं वदति! एतत् अत्र सामान्यम्। | What is it you say, it is not very hot here! |
| I - सामान्यम् ? अहं तु वस्त्राणि धर्तुम् एव न शक्नोमि। व्यजनं चालयामि चेदपि उष्णः वायुः ! स्नानं करोमि चेदपि तृप्तिः नास्ति !! | It is not hot! I feel I can't remain with clothes on at all! Even with the fan on, it is hot here. A cold bath is also unlikely to satisfy me! |
| II - भवान् इदम्प्रथमतया अत्र आगतवान्। अतः एवं क्लेशम् अनुभवति। | You are new to the place. That is why you find it difficult. |
| I - कथञ्चित् दिनद्वयं यापितम्। इतोऽपि चत्वारि दिनानि कथं यापयेयम् इति महती चिन्ता मम। पश्यतु, प्रातः नव-वादने एव एतावान् घर्मः ! | Two days have somehow been spent. I am worried that there are four more days to go. See how hot it is even at nine in the morning! |
| II - सत्यम्। अद्य वायुः एव न वाति। गगनं मेघाच्छन्नम् अस्ति। अतः घर्मः अधिकः। | Yes, there is no breeze at all today. Moreover the sky is overcast with clouds. That is why it is hot. |
| I - पश्यतु कथं स्वेदः स्रवति ! | See what an amount of sweat! |
| II - बहिः वरण्डे उपविश्य वार्तालापं कुर्वः। व्यजनम् अपि तत्रैव आनयामि। | Let us sit outside, in the verandah, and talk. We can also have the fan there. |
| I - मास्तु। वृथाश्रमः किमर्थम् ? दशवादने कथञ्चित् मया बहिः गन्तव्यम्। ततः पूर्वम् पुनः एकवारं स्नानम् एव करोमि। | No need, why do you unnecessarily trouble yourself? I must go out at ten o'clock in any case. Before I go I will again have a bath. |
| II - भवान् यथा इच्छति तथा। | As you please. |

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




## चन्दमामायां

**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

**चन्दमामायाः** प्रसारसङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्व-एशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

भारतस्य सर्वाधिकप्रसारयुता बालानां मासिकी ।